प्लु(<प्र) √क्षर्>क्षारि, प्लाक्षारयन् मै ३,१०,२[2]¶.

प्लुति[a]– -तेः ऋ १०, ६३, ⌊१७; ६४, १७⌋.

प्लुव– √प्लु द्र.

?प्लुवानमषकस्य[b] पै १, ५९,४.

प्लायोगि– २प्रयोग– द्र.

प्लाशि[c]– -शयः शौ ९,१२,१२;पै १६, १३९,१३; –शिः मा १९,८७[d]; का २१,६, ८[d]; मै ३,११, ९[d]; काठ ३८, ३[d]; शौ १०,९,१७[e]; –शिभिः[f] मा २५,८; का २७, ८,२; तै ५,७,१६,१; काठ ५३, ६; –शिभ्यः[g] ऋ १०,१६३,३; –शिभ्याम् मै ३, १५, ७[f]; –†शेः[g] शौ २, ३३, ४; २०, ९६,२०.

प्लाशु ⌊=प्लाशि⌋– -शुः पै १६,१३७, ७[e]; –शौ पै १६, १४८, ८.

?प्लि ही न प्लीहि पै १९, ३६, १४.

प्लीया[h]– -याः मै २,१२,२.

प्लीहन्[i]– -हा मा १९,८६; का २१,६, ७; मै ३,११,९; काठ ३४,१२¶; ३८, ३; –हानम् शौ २, २५, ३; –†हः[j] शौ २, ३३, ३; २०, ९६, १९; पै ४,७, ३; –ह्ना मा २५,८; का २७, ८,२; तै ५, ७, १६, १; मै ३, १५, ७; काठ ५३,६.

प्ली(ह>)हा-कुर्ण[k]– -र्णः मा २४, ४; का २६, १, ७; मै ३, १३,५.

?प्लीहाङ्गराजो पै १९,३६,१३.

√प्लु,प्लवते ऋ १०, १५५, ३; पै ६, ८,७†; प्लवस्व खि २,१६,१; शौ ४,१५,१४; पै५,७,१३.

?प्लुवायति[l] खि २, १, ४[2m];७, ७,८.

प्लुव[n]– -वः मा २४, ३४; का २६, ७, ४; तै ५, ३, १०, २¶; ५, २०, १; मै ३, १४,१५; ४, ६, ५¶; काठ ३३, ५¶; ४७, १०; –वम् ऋ १, १८२, ५; ¶तै ५, ३, १०,२; ७,५,३,२; मै ४,६, ५¶; काठ ३३,५¶; शौ १२,२, ४८; पै १७, ३५,५; –वेन काठ ३३,५¶.

प्लुषि[o]– -षी ऋ १, १९१,१; –षीन् मा २४,२९; का २६, ६, ४; मै ३, १४,८.

¶प्ले(प्ल ⌊<प्र⌋ √इ), प्लायते[p] मै ३, ९,१; प्लायेते मै ४,६,८[q].

प्ले(प्ल ⌊<प्र⌋ √ई)ङ्ख् >¶प्ले(प्ल-ई)-ङ्ख[r]– -ङ्खम् तै ७,५,८,५.

†प्सरस्[s]– -रः ऋ १,४१,७;९,२,२; ७४, ३[t]; कौ २, ३८८; जै ३, ३१, ८; –रसे ऋ ९, ९६, ⌊३; ९७,२७⌋[t].

√प्सा[u], प्सातः शौ १०, ३, १४; पै १६, ६४,५; प्सातु शौ १०, ५, ४३; पै १, ६३,२; १६, १३२, ९; प्साहि शौ १०, ३, १४; पै १६,६४,५.

---

a) व्यप. (ऋषि-)। व्यु. ?।

b) पाठः? (√प्लु> )प्लुवन–> -नम्, मशक–> -कस्य इति द्वि-पदः शोधः। पृ १९४ t अयं विशेषः द्र.। सस्थ. ?संविदम् > सं-वृत्–> -वृतम् (गति-चक्रम्) इति शोधः। c) अर्थः व्यु. च?। नाप. (शरीरावयव-)।

d) सपा. तैब्रा २,६,४,३ °शीः इति पाभे.।

e) सपा. °शिः <> °शुः इति पाभे.।

f) सपा. °शिभिः <> °शिभ्याम् इति पाभे.।

g) सपा. °शिभ्यः (आपमं १,१७,३ च) <> °शेः इति पाभे.। h) नाप. (अप्सरो-भेद-)। व्यु. ?। प्लि° इति पपा., प्लीथा– इति MW.।

i) नाप. (शरीरावयव- ⌊गुल्म-⌋)। व्यु.?। <√प्लिह् इति पाउ (१,१५९)।

j) सपा. ऋ १०,१६३,३ पाठाभावः।

k) विप. (⌊प्रकरणतः⌋ अज-)। वस. उत्तरपदाद्युदात्तः (पा ६,२,११२)। पूप. दीर्घः (पा ६,३,११५)।

l) पाठः ? (स्वार्थे णिचि) प्लावयति इति शोधः।

m) न प्लुवायति इति पाठस्य स्थाने सपा. सु ४, २ नष्टचेष्टः इति पाभे.।

n) नाप. (नौका-, जलवायस-)। अजन्ते चित्स्वरः।

o) अर्थः व्यु. च?। नाप. पुं.। =वक्रतुण्ड- इति उ. म.। <√प्लुष् इति PW. GW.।

p) °य° इति स्वरः? यनि. शोधः (तु. उत्तरं स्थलम्)।

q) सपा. काठ २८,२ क ४४,२ उपप्रेतः इति पाभे.।

r) प्रेङ्ख– इत्यनेन सन्यायता द्र.। सपा. काठ ३४, ५ प्रेङ्खम् इति पाभे.।

s) वप्रा.। अर्थः व्यु. च?। नाप. न. (*स्तोत्र-)। =रूप- ⌊तु. वें. सा. प्रथमे स्थले⌋ इति कृत्वा दे निघ ३, ७⌋ <√स्फुर् इति (सा. =प्सर– इति प्राति.?), =अन्न- ⌊तु. वें. सा. अन्यत्र⌋ इति PW. GW. PG ⌊३,१९६⌋ <√प्सा इति, GW. प्सर्–>द्वि१ इति।

t) भाप. (*प्रसाद-)। <प्र √*स(द्>)द्(√सद्) इति मतम्। u) WAG ⌊१,७५ c⌋ भक्षणेऽर्थे < √भस् इति, रूपेऽर्थे < √भास् इति च विवेक इति।

¶प्सात– -तम् काठ २५, ९$^{2}$; क ४०,२$^{2}$.

प्सुरस्[a]– -रः ऋ १०, २६,३.

## फ

फट्[b] खिसा २९,४७; मा ७,३; का ७, १, ३; शौ ४,१८, ३; पै ५, २४,३.

√फण्(गतौ) > पम्फण् > पुँम्फणत्– -णतः खि ५,५,११.

?√फर् ,पर्फरत् ऋ १०,१०६,७.

?फर्वर[c]– -रेपु ऋ १०, १०६, २.

फल्[b] खि ५,१८,१; शौ २०, १३५, ३.

√फल् (निष्पत्तौ) > फल[d]– -लम् ऋ ३, ४५, ४; मा १०, १३; का ११,५,४; ¶तै २,५, ६, ६; ५, १,५,१०; ६.१,३,७; ३, ४, ३; ७, ५,१,६; मै ¶१, ६,५; ८,१; १०, ९; २, ६, १०; ७, २०; ¶३, १,२;६$^{2}$;२, ४; ५; ६,८$^{2}$; ७, ८$^{3}$; ९,३$^{2}$; १०, ४$^{2}$; ¶काठ १२, १३$^{2}$; १९, ५$^{2}$; २६, ५; ३६, ३; ¶क ३०, ३$^{2}$; ४१, ३; शौ ६, १२४,२; पै ८, १८,६?[e]; १९, ४०,५; ५१,१४; २०,२२, ७; ५६, १; –लस्य ऋ १०, १४६,५; –¶लात् मै १,१०,९; काठ ३६,३; –लानि खि २, ६, ६; काठ २०,३¶; क ३१, ५¶; –ले पै १३, १०, ११; –लेन तै ७, ३, १४, १; काठ ४३, ४; –लेभ्यः मा २२, २८; का २४, १५, १; तै ७, ३,१९-२०, १; मै ३, १२, ७; काठ ४३, ९; १०.

¶फल-ग्रहि[f]– -हयः तै ५,२,५, ६; –हिः तै ५,१,१,४$^{2}$; मै ३, १,२; काठ १९, १; २३,४$^{2}$; क २९,८; ३६,१$^{2}$.

¶फलग्रहि-तम– -मः मै ३, १,२$^{2}$;२,४$^{2}$.

फल-व(त् >)ती– -ती पै ८, १८,५; –तीः[g] मै ३, १२, ६; काठ ४५,१४; –तीम् शौ ७, ५२,९; १९,३१,३[h]; पै १,४९, २; १०, ५, ३; –त्यः[g] मा २२, २२; का २४.८,३.

फलिन्– -लिनम् शौ ३, १५, ४[i].

फलिनी– -†नीः ऋ १०, ९७,१५; मा १२, ८९; का १३, ६,१५; तै ४, २,६,१; ४; मै २, ७,१३$^{2}$; काठ १६,१३$^{2}$; क २५, ४; शौ ८, ७,२७; पै ११, ६, ३; १६,१४,६; –न्यः तै ७,५, १८,१[g].

?फलयामसि[j] पै १६,१४,१.

†फलिग[k]– -गम् ऋ १,६२,४;१२१, १०; ४,५०,५; ८, ३२, २५; तै २, ३, १४, ४; मै ४, १२, १; काठ १०,१३; शौ २०,८८,५.

---

a) भाप. (*समृद्धि-)। (√प्सा ⌊*पुष्टौ⌋ > भावे) *प्सा– + (√भृ > अधिकरणे) *भरस्– > उस. *प्सा-भरस्– > नैप्र. यनि.। 'पूषा नः (अस्माकं) प्सुरः (*समृद्धिम्) व्रजं (*वृद्धिम्) आ (च) अभि (अभिलक्ष्य ⌊तत्-प्रदानाय⌋) प्रुषायति' इति वा. (तु. ⌊स्वरूपमात्रे⌋ PW. प्रमृ.; वैतु. सा. = रूपवान् इति कृत्वा प्सु– ⌊<√भास् इति WAG १, ७५c⌋ + ⌊मत्वर्थे⌋ रः प्र. इति, PW. प्रमृ. = अन्न- इति कृत्वा < √प्सा ⌊< √भस्⌋ 'भक्षणे' तु. WAG. इति, GW.ORN. प्सुर्– > प्सुरः ⌊द्वि ३⌋ इति च)।

b) भाप. सत् वा. क्रिवि. (पाप्र. = अव्य.) = 'अभिचर्यमाणस्य फट् (पातः) यथा स्यात्तथा' < √*फड् = √फल् ⌊विशरणे⌋ इति (तु. ⌊व्यु.⌋ सा. ⌊का.⌋, उ. म. च)। शब्दानुकृतिरूपं सरूपं प्राति. इतोऽन्यत् (तु. MW.)।

c) विप. < √फर्व् ⌊पूरणे⌋ इति सा.।

d) नाप.। पचाद्यचि वृषादित्वम् उसं. (पा ६,१,२०२)।

e) पाठः? फालम् इति शोधः (तु. कौसू २०,५)।

f) विप. (वनस्पति-)। उस. उप. कर्तरि इन् प्र.।

g) सपा. फलवतीः <> फलवत्यः (माश १३, १, ९, १०$^{2}$ च) <> फलिन्यः (तैब्रा ३,८,१३, ३ च) इति पाभे.।

h) °ला° इति W. टि.।

i) °नं मा इत्यस्य स्थाने सपा. पै १९,४९,२ गोधनिनः इति पाभे.।

j) पाठः? (√भृ ⌊धारणे⌋ > भावे) *भार्यं– > √भार्यि > *भार्ययामसि (धारणं कारयामसि) इति शोधः। सपा. शौ ८, ७, २२ ?पाययामसि इति पाभे. अपि समान-शोधः स्यादिति कृत्वा पृ १९८६ कृतपूर्वो निर्देशो नेष्टः। सस्थ. ?बलम् > (√भृ > कर्मणि) भर– > -रम् इत्यपि शोधः। 'इमं पुरुषं तस्यामृतस्य भरं *भार्ययामसि' इति वा.।

k) अर्थः व्यु. च? °लि-ग इति ऋ. शौ. पपा.। तै पपा. नावग्रहः। = मेघ- इति निघ ⌊१,१०⌋ वें. सा ⌊ऋ.⌋; विप. (वल-) इति भा. सा ⌊तै.⌋; = मेघवत् जलाधारपात्र-विशेष- इति PW.GW. प्रमृ.; व्यप. (असुर-) इति स्क. K. ⌊तै.⌋। मै. मूको. °ली° इति!।

-फली √कृ[a], ¶फलीकरोति मै ४, १, ७; काठ ३१, ४; क ४७, ४; फलीकुरु पै १७,१५,२.
फली-करण[b]- -णाः शौ ११,३,६; पै १६,५३,११.
फली-कृत- -तः पै १६, १२४, २; ३; -तम् पै १६,१२४,२;३.
√*फ(ल्ग् > )ल्गु(बधा. )>फल्गु, ल्गू- -ल्गु पै ५, २०, ८[c]; -ल्गुः[d] काठ १२, १३¶[e]; २७, २¶[e]; ४९, २[f]; -ल्गू (?ः) क ४२,२¶[e]; -ल्गूः[f,g] मा २४,४; का २६,१,७; तै ५,६, १२, १; मै ३,१३,५.

फल्गु-मणि[h]- -णिः पै १९,३१, ८.
फल्गुन- -नः का ११,७,१[i].
फल्गुनी- -नी ¶तै २,१,२, २[e,j]; ४[k,l], ४, १०, १; २; -नीः मै १, ६, ९[2]¶; २,१३, २०[2l]; काठ ३९,१३[2l];-¶नीपु मै १,६,९[2]; काठ ८,१; क ६, ६[m]; शौ १४, १,१३‡[n]; -न्यौ शौ १९, ७,३.
¶फल्गुनी-पूर्णमास[o]- -सः तै ७, ४,८,२; मै १,६, ९; -से तै ७,४,८,१; मै १, ६,९[2]; काठ ८, १; क ६,६.

¶फल्गुनीपूर्णमास्य[p]- -स्यम् मै १,६,९[2].
फाल्गु(न>)नी- -नीषु पै १८, २,२‡[n].
फल्व[q]- -ल्वेन ऋ ४,५,१४.
फारि-*व[r]- -वा ऋ १०,१०६,८.
फाल[s]- -लः ऋ १०, ११७,७; मै ३, १,२¶; पै २,२२, ३; १२,६,३; १३‡[t]; -लम् शौ १०,६,६-१०; पै २,२२,३; १६,४२,६-८;४३, १; २; -†लाः[t] ऋ ४, ५७, ८; मा १२,६९; का १३, ५, ८; तै ४,२,५,६; मै २,७,१२; -लात् शौ १०, ६,२; पै १६, ४२, २;

a) धा. भङ्गपूर्विकायां तुषस्य निवृत्तौ वृत्तिः द्र. । व्यु. ? । ( √वस् ⌊आच्छादने⌋ > ) *वस्- ( तुष-) + ( √*वड् ⌊विभाजने⌋ > √वडि > भावे) *वड्या- > तस. *वस्-वड्या- > नैप्र. *स्फड्या- > *फली- इत्यस्य पाप्र. च्व्यन्ततयोपवर्ण्यमानस्य सतो गतित्वेन व्यवहारः द्र. (तु. पंजा. फण्डना इति) ।
b) नाप. (⌊निष्तुषीकृत-⌋तण्डुल-) । उस. उप. कर्मणि कृत् ।
c) नाप. (साररहितांश- ⌊तु. फल्व-⌋) । धा. रिक्तभावे वृत्तिः । d) विप. [अवि-(नीलवर्णा- इति भा.,लोहितवर्णा- इति सा ⌊तै २, १, २,२⌋)] । व्यु. ? । < √फल् इति पाउ १,१८⌋,⌊दीप्त्यर्थे⌋ < √स्फर् वा √स्फुर् वेति च GW. प्रभृ. । धा. मालिन्ये वृत्तिः स्यात् ? ।
e) सपा. फल्गुः <> फल्गू (?ः) <> फल्गुनी <> मै २,५,२ लोहिनी इति पाभे. ।
f) विप. ( अजा- ) । सपा. फल्गुः <> फल्गूः इति पाभे. ।
g) = लवणवर्णा- इति सा. ⌊तै.⌋, अपुष्टशरीरा- (रिक्ता-) इतीव उ. म. ? । धा. मलिनभावे वृत्तिरिति कृत्वा कृष्णवर्णे तात्पर्यं प्रतीयते । h) कस. । पूप. धा. अर्थः ? ।
i) विप. ( ⌊*अर्जनशील-⌋ यजमान- ) । धा. अर्जने = ऐश्वर्ये वृत्तिः (तु. सपा. मा १०, २१ माश ५, ४, ३,७ अर्जुनः इति पाभे.; वैतु. माश. प्रभृ. व्यप. ⌊इन्द्र-⌋ इति, पाउ ⌊३,५६⌋ < √फल् इति च ?) ।
j) विप. (⌊मलिनवर्णा-⌋ अवि-) । शेषं *d* टि. द्र. ।
k) इतः प्रभृ. स्थलेषु. नाप. (नक्षत्र-विशेष-) । द्वित्वेन बहुत्वेन च प्रयोगः (पा १, २,६०) । धा. भर्गे = दीप्तौ वृत्तिः । l) सपा. °नी <> °नीः इति पाभे. ।
m) °णीषु इति पाठः ? ।
n) = सपा. कौसू ७५, ५ । ऋ १०, ८५, १३ तु अर्जुन्योः इति, आपगृ ३, २ भागृ १, १२ : १७ फल्गुनीभ्याम् इति, पै १८, २, २ फा° इति च पाभे. ।
o) मलो. कस. अन्तोदात्तः ।
p) विप. । तत्रभवार्थीयः यत् प्र. तित्स्वरश्च ।
q) विप. ( ⌊रिक्त-⌋ वचस्- ) । *फल्गुक- > नैप्र. यनि. । जात्यः स्वरितः ।
r) विप. ( अश्विन्- ) । अर्थः व्यु. च ? । पपा. नावग्रहः । < फारि-वन्- ( < √स्फुर् ) इति सा., < √फर् ( < √फर्व् ) इति GW. प्रभृ. ।
s) नाप. ( हलाग्र- ) । व्यु. ? । < √फल् ⌊विशरणे⌋ > फालि इति अभा. । √व्रश्च् > *व्रश्चर- (छेदक-) > नैप्र. *व्रच्छर- > *वाहर- > यनि. मतम् ।
t) सपा. फालः <> नः फालाः (आश्रौ २,२०,४ शांश्रौ ३,१८,४ वौश्रौ १०,२५ : ४ कौगृ ३, १३,१० शांगृ ४, १३, ४ बृदे ५,९ च) <> मा १२,६९ का १३,५,८ माश ७,२,२,९ सु फालाः <> मै २,७,१२ काठ १६, १२ क २५,३ सुफालाः <> शौ ३,१७,५ सुफालाः इति पाभे. ।

–लेन काठ १९, ११; क २९, ८१; शौ १०,६,३३;पै १६,४५, ३; –लैः मै २, ७, १२; पै २, २२, ४.

¶फाल-कृष्ट,ष्टा[a]– -ष्टम् काठ १२,७; –ष्टाः मै ४,३,२.

फाल-मणि– -णिः पै १६,४५,२[b].

फेन[c]– -नः पै ४,१६,६; –नम् ऋ १, १०४,३; ३,५३,२२; १०, ६१, ८; शौ १,८,१; १२, ३, २९; पै २,२,३; ४,४,८; ९,१०,१;१७. ३८, ८; १९, ३३, १२[d]; –नात् पै १५,२३, १०; –नान् शौ ६, ११३,२[d]; –†नेन ऋ ८, १४, १३; मा १९, ७१; का २१, ४, २१; मै ४, ३,४; कौ १, २११; जै १,२२,८; शौ २०,२९,३.

फेन्य[e]– -न्याय मा १६, ४२; का १७, ७, १; तै ४,५, ८, २; मै २,९,८; काठ१७,१५; क २७,५.

# ब

√बंह्,>बंहि, ¶बंहयते मै २, १,५; काठ ११,५.

*बंह्–>†बंहिष्ठ[f]– -ष्ठम् ऋ ५, ६२,९; मै ४,१४,१०.

¶बंहीय(स् >)सी– -सीः मै १, ८,३.

बकुर[g]– -रेण ऋ १,११७,२१.

†बाकुर[h]– -रम् ऋ ९, १,८; जै ४, ४, ८.

बज[i]– -जः शौ ८, ६, ६; ७; २४; पै १६, ७९,६; ८; ८०, ४; –जम् शौ ८,६,३; पै १६, ७९,३.

†ब(,व्र)ट्[j] ऋ १, ९६,१; १४१, १; ५, ६७, १; ८४,१; ६, ५९, २; ८,६३,११; १०१,११;१२;१०, ९२, ३; मा ३३, ३९[2]; ४०; का ३२, ३, १०[2]; ११; तै २,२, १२,२; मै ४, १०, ६; १२, २; काठ १०, १२; कौ १, २७६[2]; २, ११३८[2]; ११३९; जै १, २९,४[2]; ४, ३, २[2]; ३; शौ १३, २, २९[2]; २०, ५८, ३[2]; ४; पै ५, १२, १$; १८, २३,६[2].

बळा[k] ऋ ८,८०,१.

बण्ड ण्डा– वण्ड,ण्डा– द्र.

†बत[l] ऋ १०, १०,१३; शौ १८, १, १५.

†बत[m]– -तः ऋ १०,१०,१३; शौ १८,१,१५.

बदर[n]– -रम् मा १९, २२; का २१, २,११; मै २, ४,१¶; काठ १२, १०¶; –रैः मा १९, ९०; २१, ३०; ३१; का २१, ६, ११; २३, ४,२; ३; मै ३,११, २[2];९; काठ ३८, ३.

¶बदर-सक्तु[o]– -क्तुभिः मै २,३,९; काठ १२,१०.

बद्ध,द्धा– √बध्,न्ध् (बधा.) द्र.

---

a) विप. (अन्न-, ⌊ग्राम्य-⌋ ओषधि-)। तृस.।

b) सपा. शौ १०,६,३१ विभे.।

c) नाप. (मण्ड-)। व्यु.?। <√स्फाय् इति पाउ ⌊३, ३⌋, <√फण् इति MW.?।

d) सपा. फेनम् <> फेनान् इति पाभे.।

e) विप. (रुद्र-)। तत्रभवीयः यत् प्र. यना. स्वरश्च द्र.।

f) विप.। इष्ठन् प्र. नित्स्वरश्च (वैतु. फि ⌊७⌋ अन्तोदात्तः इति, पाप्र. ⌊६,४,१५७⌋, दे. ⌊३,३⌋ < बहुल– इति, ⌊पक्षे⌋ दे. < बहु– इति)।

g) भाप. (*आवरणाऽतिशय-)। व्यु.?। (√वर्ष् ⌊आवरणे⌋ > भावे) वर्ष– > वीप्सायां *वर्ष-वर्ष– > नैप्र. यनि. (वैतु. या ⌊६, २५-६⌋ नाप. ⌊ज्योतिस्- वा उदक वा⌋ इति कृत्वा < √भास् + √कृ वा भय-+ √कृ वा, √भास् + √द्रु वेति, सा. ⌊पक्षे⌋ वज्रार्थे, GW. प्रभृ. च वायविशेषार्थे नाप. इति?)।

h) विप. [⌊*आवरण-कारक-⌋ इति- (*दशा-पवित्र- ⌊तु. सा. GW.; वैतु. PW. प्रभृ. वायुवायविशेषार्थे नाप. इति?⌋)]। हेत्वर्थे तद्धितः अण् प्र.। यद्वा बकुर– इत्यनेन समानमूलं सत् स्वतन्त्रमेतत् प्राति.।

i) नाप.। अर्थः व्यु. च ?। =ओषधि-विशेष- इति MW., =सर्षप- इति सा.।

j) सत्यमित्यर्थे अव्य. (तु. निघ ⌊३,१०⌋ या ⌊११,३७⌋), *भृश वा। तै. मै. काठ. क. वकारादिः पाठः द्र.। व्यु?। *भृष– (= वृष– ⌊भाप. = सत्य-, भृश-⌋) + (√भृ ⌊धारणे⌋ > भावे) भृत्– > वस. *भृष- भृत्– > नैप्र. यनि.।

k) तृतीया-प्रतिरूपकं सत् (!) अव्य. (< बट्)। यद्वा बट्, आ (आ-ऽ) करम् इत्येवं द्वि-पदः पाठ-शोधः द्र. (वैतु. बळा, अकरम् इति पपा.)?।

l) खेदाऽनुकम्पाप्रकाशने अव्य. (तु. या ⌊६, २७⌋)। व्यु. ?।

m) विप. (⌊*गुप्तरूप-⌋ यम-)। व्यु. ?। या ⌊६, २८⌋ वें. सा. GW. प्रभृ. दुर्बलार्थे नैप्र. < बल– अतीत– इति। (√वृ ⌊आवरणे⌋ >) वृत– > नैप्र. यनि. इति तु मतम्।

n) नाप. (बदरी-फल-)। व्यु. ?। पाप्र (यक्र. ४, ३, १६३; १,२,४९) < बदरी- इति, < √बद् इति पाउभो २,३,३८।

o) षस. अन्तोदात्तः द्र.

**?बुद्ध वो** शौ २०,१२९,१६[a].

**बद्धवा, बद्धधान्, ना** √वध्, न्ध् (वधा.) द्र.

**बुद्ध[b]-** -द्धानि शौ १३, ७,१७[c]; -द्धाय काठ ४२,१०; -द्धे काठ ३९, ६[d]; शौ १३,७,१७[e].

**√वध्, न्ध् (वधा.)[f], > बीभत्स,** बध्नीते मै ३, ६, ७¶; ¶बध्नाति तै ६,१,७,२;६; मै २, २,१; ४, १,१०; काठ ११,६[2]; २४,३;५; ३१, ८; क ३७, ४; ६; ४७, ८; पै १, ८५, १$; बध्नन्ति पै ३, ३२, ५; १६, ४४,३[g]; बध्नामि खि ३,१५,७; तै ३,१, ४, १¶; शौ ११,६,२६; बध्नामि खि ३, १५, ६; १०; तै २, ३, १,५; मै २, २, १; ५, ६; काठ ११, ६¶; १३, २; शौ १,३५, १[h]; ३,५,८; ४,१०,७[h]; ५, ३०, १; १९, २८, १; ३२, १; ३३, ४[h]; ४६, १; पै १,९८,४; २,३७,५; ४,१८,७; २३,१; २५,७[h]; ४०, १; ७, १९,१०; ९,१३,१; १२, ४, १; ५,४[h]; १३, ११,१; १६, २३, ६; २०, ५७, ९; १०; बध्नात् शौ १९, ४६, १[i]; बध्नीताम्[j] मा ४, १९; का ४, ६, ४; बध्नातु तै १,२, ४,२[j]; ६, १,७,६[j]; मै १,२,४[j]; ३, ७,६[j]; काठ २,५[j]; २४,३[2j]; क १,१७[j]; ३७, ४[2j]; शौ ८,५, २२; पै ४, २३, १[i]; १६, २८, ११; ४२[k], ६-८; ४३[k], १-९; ४४[k], ५-७; बध्नन्तु शौ ८, ५, १०; पै १६, २७, १०; बधान मा १, २५; २६[2]; का १, ९, ३; ४[2]; तै १, १,९, १; २[2]; मै १,१, १०[3]; ४, १, १०; बधान मा २२, ४; का २४, १, ४; मै १, १, १०[3]; ३, १२, १; ४, १, १०¶; काठ १, ९[3]; ३१, ८; ३७, १३[2]; क १, ९[3]; ४७, ८; शौ १०, ५,४४; पै १, ६३, ३; ५, ३१, २; १६, १३२,१०; ‡अबध्नीत[l] तै १,१, १०,३; ३, ५, ६, २; अबध्नात् ऋ १०,८५,२४[l]; शौ १०[k],६,६-१७; २२-२८; †१४, १, १९[l]; ५८[l]; पै ३, ३९,२; ४, १८, ७; †१८,२,६[l]; ६, ६[l]; अबध्नत शौ १०, ६, १८[2]-२०[2]; पै १, ९३, ३; १६, २८, ४[m]; ४४,१[2]-३[2]; †अबध्नन् ऋ १०, ९०,१५; मा ३१,१५; का ३५,१,१५; जै २, ४, २; शौ १९,६,१५; पै ९, ५, १३; ¶अबध्नन् काठ २५, ८; क ४०, १; ¶बध्नीयात् काठ २४, ५; क ३७, ६.

बद्धधे[n] ऋ १, ८१,५; बद्धधे ऋ १,८०,१३[o]; ७,६१,४[n]; बेधिषे शौ ६, ६३, ३; ८४, ४; पै १९, ११,३; भन्त्स्यामि मा २२, ४; का २४, १, ४; भन्त्स्यामि मै ३,१२,१; बध्यासम् शौ ७, ५२, १; पै १९,९,८[p].

बध्यते शौ ९,६,६; १८,४, ७०; बध्यते ऋ १०, ८५, २८; शौ ८, ५, १; १४, १, २६†; १९, ३१,१४[q]; ४५,४; पै १,११२,४; १३, ५, १; १५, ४, ४; १६, २७, १; १११, ६; १८,३, ५†; बध्यसे शौ ६,१२१,२[2]; पै १६, ५१, २[2]; बध्यताम् शौ १, १४,

---

a) सपा. खि ५, १५, ४ बल्ववो इति पाभे. ?, RW. व्रीहियवौ इति शोधः ? (तु. पृ १९६७ *f*)।

b) नाप. (संख्या-विशेष-)। व्यु. ?।

c) ?बुद्धानि (तु. शंपा. सात. RW.) प्रभृ. अशुद्धाः पाठा उपेक्ष्याः। d) सपा. बौश्रौ १८, ४३ : ७; २६, ३३ :१२ पद्वे ? इति पाभे. (यत्र यनि. शोधः)।

e) ?बध्वे (तु. शंपा. सात.), ?बुद्धे (तु. RW. प्रभृ.) प्रभृ. अशुद्धाः पाठा उपेक्ष्याः। यनि. सप्त१ =बद्वस्योपरि [ततोऽप्यधिकानि सन्ति (अपराणि बहूनि बद्धानि) इति भावः ⌊तु. Gri. प्रभृ.; वैतु. W. प्र२ इति ?⌋]।

f) धा. बन्धन-बाधादिषु वृत्तिः।

g) तं बध्नन्ति इत्यस्य स्थाने सपा. शौ १०,६,२० तैर्मेदिनः इति पाभे.। h) पाभे. पृ ६६८ *f* द्र.।

i) सपा. बध्नात् <> बध्नातु इति पाभे.।

j) सपा. बध्नीताम् (माश ३, २, ४, १८ च) <> बध्नातु (आपश्रौ १०, २२,१० वैश्रौ १२,१६ : १४ हिश्रौ ७,२,२२ च) इति पाभे.।

k) सपा. बध्नातु <> अबध्नात् इति पाभे.।

l) सपा. अबध्नीत (बौश्रौ १, २० : २८ आपमं १, ५, १७ च) <> अबध्नात् <> माश्रौ १, ३, ५, १७ वाश्रौ १, ३,७,१७ मागृ १,११,२० जग्रन्थ इति पाभे.।

m) सपा. शौ ८, ५,१४ अकृण्वत इति पाभे.।

n) धा. वर्तने = व्यापने वृत्तिः (वैतु. GW. प्रभृ. √बाध् ⌊बाधने⌋ इत्यस्य वृत्तमिति ?)।

o) धा. वृद्धौ = स्तुतौ वृत्तिः। रूपं च कर्म-वृत्तम् (तु. वें. स्क. सा.; वैतु. Gri. धा. = √बद् ⌊स्थैर्ये⌋ इतीव ?)।

p) व° इति मूको.।

q) सपा. पै १०,५,१४ उच्यते (<√उच्) इति पाभे.।

३; २९, ४; १२, ४, ३७; पै १, १५,२; १०,१२,८; १७,१९,७; †बध्यन्ताम्[a] ऋ ४,५७,४; शौ ३,१७,६.

बद्ध,द्धा– -द्धः ऋ १,२४,१३;१५८, ४; ४, ४०, ४; ५८, ⌊३ (७, १०१, १)⌋; १०, ३८, ५; ४८, १०; खि १, ५,१०?[b]; ५,२१, ३; खिसा २६,२२; †मा ९,१४; १७,९१; †का १०, ३, ७; १९, १, ५; तै १,७,८,३†; २, २,७, ५¶; ३, २, ८, २; ६, २, ९, १¶; मै १, ६, २†; ११, २; २, ३, ८; ३, ६, ७¶; ¶काठ ८, १२; १३, १४†; २५, ८; ४०, ७†; ¶क ७,७; ४०, १; शौ २, १२, २; ३५, ३; ६, ११९,१[c]; २०, १३५, १३; पै १, ८८, १; २, ५,३; ३७, ५; ८, १३, ३†; २०, ४१,२; –द्धम् ऋ ६, ७४, ३; ८, ६७,१४; १८; १०,३४, ४; १४९,१; तै १,८,२२, ५†; ¶६, १,७, २; २, ९, १; मै ४, ११, २†; काठ ११, १२†; शौ ७, १३,४; ४३,२; पै १, १०९, ४; ३, ३२, ५; ४, ७,७‡[d]; ५, २८, २; १०, ४, ५; –द्धया मै ३,७,६; –¶द्धस्य मै ३, ६, ७; काठ २३, ६; –द्धा काठ २४, ३¶; क ३७, ४¶; शौ ५, ३०, १६?[e,f]; –द्धाः काठ ११, ६¶; –†द्धान् ऋ १०,७३, ११; काठ ९,१९; कौ १, ३१९; जै १,३३, ७; पै १६, २९,१०$[g]; २०,५२, ८; –द्धानाम्[h] शौ ६,८४, १; पै १९,५,११; –¶द्धेन मै ३,७, ५; ४,८,२.

बद्ध-क[i]– -कम् शौ ६,१२१,४; पै १६,५१.४.

बद्धक-मोचन[j]– -नम् शौ ६, १२१,३; पै १६,५१,३.

बद्ध-वीर[k]– -राः तै २,३,१,५¶.

बद्ध्वा काठ २४,५¶; क ३७, ६¶; शौ ७, ३९, ५; ८,८,१०[g]; १०, ६,१८; पै ३,२९,६[g]; १६,४४,२.

†बद्बधान,ना[l]– -नः ऋ ७,६९,१; मै ४, १४, १०; –नस्य ऋ १, ५२, १०; –नाः ऋ ४, १९, ८; –†नान् ऋ ५, ३२, १; २; कौ १,३१५; जै १,३३,३.

बधिर[m]– -रः ¶मै ३,१,९[3]; ४,१, १; ५, २; काठ ३०, १०¶; क ४६, ८¶; शौ ११,४,२; पै १६, ५६,४; –रम् मा ३०, १०; का ३४, २,२; –रा ऋ ४, २३,८[n]; –राः ऋ ९, ७३, ६; शौ ११, ११,२२[o].

बध्नत्– -ध्नन् खि ५, ७,२,११; ४, १५; मा २१,५९; २८,२३;४६; का २३,६,१२; ३०, २,१२; ४, १२; मै ४, १३, ९; काठ १९, १३[3].

बध्यमान– -नम् तै ३, १,४,२; मै १,२, १५; ३, ९, ७[3]; ¶; काठ ३०, ८; ९; शौ २, ३४, ३[p]; पै ३,३२,४; –नाः[q] तै ३,१,४,२; मै १, २, १५; ३, ९, ७; काठ ३०,८; ९; –ने ऋ ४,४२,८.

बन्ध[r]– -न्धः शौ १०, ५,४४; १९, ५६,२[s]; पै १,६३,३; ३, ८,२; १३, ४, ५; १६, १३२, १०; –न्धम् मा १२, ६३[t]; का १३, ५,२[t]; तै ४, २,५, ३[t]; मै २,७, १२[t]; काठ १६, १२[t]; क २५, ३[t]; शौ ५,१४,१०[u]; –न्धात् ऋ ८,४०, ८; ६७,१८; तै ३,१,४, ४; ७,५,९, २¶; मै १,२,१५; शौ ६, १२१, ४; पै १६, ५१,

---

a) पाभे. पृ ६७८ *i* द्र.।

b) पाठः ? (तु. सस्थ. टि. सु-हस्त–)।

c) सपा. पै ५,१७,६ विबद्धः इति पाभे.।

d) सपा. ऋ १०,१६३,६ जातम् इति, शौ २,३३,७; २०,९६,२३ यस्ते इति च पाभे.।

e) पाभे. पृ ८६९ *d* द्र।

f) विप. (जिह्वा-)। पाठः ? (√वध् ⌊*हिंसायाम्⌋ >) *व(ध्र >)ध्रा– > -ध्रा इति शोधः (तु. पाभे.)।

g) सपा. °द्धान् <> °द्ध्वा इति पाभे.।

h) सपा. बद्धानाम् <> बन्धानाम् इति पाभे.।

i) कुत्सायां कन् प्र. (पा ५,३,७४) नित्स्वरश्च।

j) कास. (तु. सा ⌊तैआ २,६,१⌋)।

k) विप. (आदित्य-)। बस.।

l) विप. (रथ-, वृत्र-, सीरा-प्रभृ.)। ⌊कर्तरि⌋ कानच् प्र. चित्स्वरश्च (वैतु. सा ⌊ऋ १,५२,१०⌋, GW. प्रभृ. <√बाध् इति)।

m) नाप.। किरच् प्र. (पाउ १,५१ ⌊तु. या १०,४१⌋)।

n) विप. (कर्ण-)।

o) = संयुक्त- इति मतम्।

p) ब° इति सा.।

q) सपा. शौ २, ३४, ३ पै ३, ३२, ४ दीध्यानाः इति पाभे.।

r) नाप.। भावे करणे वा घञि प्र. अन्तोदात्तः (पा ६,१,१६०)।

s) भूयानत्र मूको. पाभे., बन्धुः इति सा., बुध्नः इति RW.।

t) पाभे. पृ १९७१ *p* द्र.।

u) पाभे. पृ १४६२ *a* द्र.।

४; –न्धानाम्[a] मा १२,६४; का १३,५,३; तै ४, २, ५,३; मै २, २, १; काठ १६,१२; क २५,३; –न्धे पै १, ११२, ४; –न्धेभ्यः शौ १९, ४५,५; पै १५, ४, ५; १६,४६-४७,१-१०; ४८,१-५; –†न्धेषु ऋ १०, ८५, २८; शौ १४, १,२६; पै १८,३,५; –न्धैः पै २०,२७,६.

बन्ध-पाश[b]- -शान्[c] शौ ६, ६३,२; ८४,३.

१बन्धन[d]- -नम् शौ ६, १४,२; पै १९, १३,८; –नात् ऋ ७,५९, १२; खिसा २६, २२; मा ३, ६०[2]; †; का ३, ८,४†; ५; तै १, ८, ६, २†; मै १, १०, ४†; काठ ९,७†; क ८,१०†; शौ ३, ६,७; ९,२,१२; १४, १, १७†; पै ३, ३, ७; १६, ७७, २; १८, २, ७†; –†नानि ऋ १, १६३, ३; ४; मा २९, १४; १५; का ३१,३,३; ४; तै ४, ६, ७, २[2]; काठ ४०, ६[2]; पै ८, १,९$[e]; –नासः ऋ ५,१२,४.

बन्धने-ष्ठ(<स्थ)[f]- -ष्ठः पै ४, २०,६.

बन्धु[g]- -न्धु शौ ५,१३,७; २२,८; १०, १, ३[h]; पै ८, २,६; –न्धुः ऋ १,१५४, ५;१६४, ३३; ७, ७२,२; ८,७३,१२; खि ४,१०, ३; १०[2],३; मा ४, २२; १०,६; ३२,१०†; का ४,७,३; ११, ४, २; ३५, ३, ७†; तै १, २,७,१; ८, १२, १; ७, ५, २५, २¶; मै १, २,५; ५,२; ९; २, ६,८; ४, १२,१†; काठ २, ६; ७, १; ७; ८,४[i]; १५, ६; २४, ६; क १, १९;५,१;६,९[i]; ३७,७; शौ २, १,३‡[j]; ४, १, ३[k]; ५,११,१०; ११; ९, १५, १२†; १०, १०, २३; पै १, ९८,२?[l];२,६,३‡[m]; ८, १, १०; ११; १३, ५, २८; १६, ६९, २†;१०९,३; –न्धुना शौ १९, ५६, ५[m]; पै ३, ८,५; –न्धुम् ऋ ५,७३,४; ७,६७,९; १०, १२९,४; खि ४, १०[2], ५; तै २,३,१४,६[k]; काठ १०,१३[k]; पै २,६,५; ४,१४,४; ५,२,३[k]; १६, ३५, ३[h]; १९, २०, ११; –न्धून् ऋ ९,९७,१७; –¶न्धोः तै २, ५, ८,७; काठ २६, ७; क ४१,५.

बन्धु-क्षित्[n]- -क्षिद्भयः ऋ १, १३२,३.

बन्धु-ता- -†ता ऋ ३, ६०,१; ४,४,११; १०, १४४,५; तै १, २,१४,५; मै ४,११,५; काठ ६, ११; –ताम् ¶तै १, ५, १, ४; ५, २, १०, ५; मै २,२,५[2]; ¶; ¶काठ ११,८; २०, ९; क ३१, ११¶.

बन्धु-पृच्छ्[o]- -पृच्छा ऋ ३, ५४,१६.

बन्धु-मत्- -मन्तम् ऋ ८, २१, ४; –मन्ति मै ४, ८, ८¶; –¶मान् तै १, ५, १,४; ५, २, १०,५; काठ २०,९; क ३१,११.

¶बन्धुमती[p]- -तीः मै १, ५,१०; काठ ७,७.

बन्ध्वे(न्धु-ए)ष[q]- -षे ऋ ५, ५२,१६.

बन्धुर[r]- -न्धुरः शौ ३,९,३; पै ३, ७,४.

बन्धुर,रा[s]- -रम् शौ १०,४,२[t]; पै १६,१५,२; –रा शौ ३, ९,४[u];

---

[a]) पाभे. पृ २२६१ *h* द्र. [b]) कस. द्वस. वा अन्तोदात्तः ।

[c]) पाभे. पृ १९७१ *p* द्र. । [d]) = बन्ध- । नाप., विप. ⌊ऋ ५,१२,४⌋ च । ल्युडन्तं प्राति. ।

[e]) सपा. शौ ५,११,९ उद्यतानि इति पाभे. ।

[f]) विप. (अश्व-) । [g]) भाप., नाप. । उन् प्र. (पाउ १, १० ⌊तु. या ४,२१⌋) ।

[h]) सपा. °न्धु <> न्धुम् इति पाभे. ।

[i]) तु. Sch.; वैतु. संस्कर्तुः टि. ⌊क.⌋ पूर्वेण समस्तमिति ।

[j]) पाभे. पृ ८७८ *f* द्र. । [k]) परस्परं पाभे. ।

[l]) शोधितः पाठः पृ १३४७ *l* द्र. ।

[m]) °न्धुना इति स्वरः ? यनि. शोधः (तु. W.) ।

[n]) विप. । उस. उप. <√क्षि ⌊निवासे⌋ ।

[o]) विप. (अश्विन्-) । उस. उप. क्विबन्तम् ।

[p]) नाप. (इष्टका-विशेष-) ।

[q]) षस. उप. √इष् ⌊गतौ⌋ + भावे घञ् प्र. ।

[r]) नाप. (मणि-) इति सा. W. B. (वैतु. सा ⌊व्यत्ययेन⌋ °र- > -रः ⌊प्र३⌋ इति ?) । व्यु. ? । पपा. नावग्रहः । भाप. (*बन्धनाऽऽवृत-) । बन्ध- + वृत्- > षस. *बन्ध-वृत्- > नैप्र. यनि. इति मतम् ।

[s]) नाप. न. स्त्री. । शेषम् उत्तरत्र टि. द्र. ।

[t]) वैतु. W. B. = सारथि-निवेश्य-रथभाग- इति ? ।

[u]) = *रज्जु- । '(हे विष्कन्धपीडिता जनाः !) येन (यतः ⌊यूयं⌋) श्रवस्यवः (*विष्कन्धस्तुतिमन्तः) चरथ, (अतः विज्ञापयामि नूनं मया धार्यमाणा इयं) बन्धुरा (रशना) काववस्य (*क्षमैवतः ⌊विष्कन्धस्य⌋) दूषणा (*नियमनी) उ (निश्चयेन ⌊भवतीति⌋) इव (यथा) शुनां कपिः

पै ३,७,५; -रे पै १५,१२,७[a].

बीभत्सा[b]- -त्सायै मा ३०, १७; का ३४,३,४.

बीभत्सु[c]- -त्सुः ऋ १, १६४, ८; शौ ९,१४,८†; पै १६,६६,८†; ८७, ९[d]; -त्सुवः ऋ १०, १२४, ८; -त्सूनाम् ऋ १०, १२४, ९; -त्सौ शौ ११, १०, २८[d].

?बधान्[e] मै ४, ९, १२.

बधिर्-, बध्नत्-, बध्यमान-, √बन्ध्, बन्ध्-, १बन्धन- √वध्,न्ध(वधा.) द्र.

२?बन्धन[f]- -नम् खि १,१२,६‡[g].

बन्धु- √वध्, न्ध् (वधा.) द्र.

बन्धुक[h]- > बान्धुक[i]- -कः काठ २१,१०[j].

बन्धुर्-, बन्धुर- √वध्, न्ध् (वधा.) द्र.

बप्सत्- √भस् (वधा.) द्र.

बबर[k]- -रः तै ७, १,१०,२¶.

बबृहाण- √बृंह्, बृह् (वधा.) द्र.

बभूवस्-, बभूवुषी- √भू द्र.

बभ्राण- √भृ द्र.

१बभ्रि[l]- -भ्रिः तै ४,१,१,४.

२बभ्रि- √भृ द्र.

बभ्रु,भ्रू[m]- -भ्रवः ऋ ९, ३३,२;६३, ४; ६; १०,३४,५; मा २४,९[n]; १४[n];१८[o]; का २६,२-३,४[n];४, ३[o]; मै[n] ३, १३,१०; १२; १३; १५; १६; कौ २, ११५†; जै ३, १२, २†; शौ ८, ७, १; पै १६, १२, १; -भ्रवे ऋ २, ३३, ८; ९, ११, ४; तै ७, ३, १८, १; काठ ४३,८; कौ २, ७९४†; शौ ६, २०, ३; ५६, २; ७, ११४, १; पै ४,९,२; १३, १, २; १९, ९, १५; १२, १०; -भ्रु काठ १०, २¶; पै १९,२४,१४;२०, २५, २; -०भ्रु शौ ६, १३९,३; -भ्रुः ऋ २, ३३, ५; ९; ५, ३०, १४[p]; ८, २९, १; मा १६, ६; २४, २; २९, ५८[n]; का १७, १, ६; २६, १, ३; ३१, ६, १[n]; तै ¶१, ८,८, १; १७,१; ¶२, १,२, ९; ३,३; ४; ४, ५, १,२; ५,५, २२,१[n]; ६, ११,१; मै २,¶५,१;५; ७[r]; ८; ¶६, ५; १३[r]; ९,२; ३,१३,३; ४, ७, ८¶; काठ ¶१५, १; ३; ४; ९; १७, ११; २४, १[r]¶; ४८,१[n]; ४९,१; क २७,१;३७, २[r]¶; शौ ५,२३,४; ६, १६,३; ९३, १[q]; ११,७,२६; पै १,४५, २; ७,२,४; ८, ४; १४, २, ९; १६, १५५, ३; १९, ५, ९; -भ्रुणा शौ ४, २९, २[r]; ५, ७, ५; पै ३,२८,३[s]; ४,३८,२; ७, ७, ६; ९,१०; २०, ८,४[t]; ४२, २[t];६०,६; -भ्रुभिः खि ५,१५,

(*श्रृङ्खला [नियमनी भवति])' इति वा. इति कृत्वा यनि. प्र१ द्र. (तु. सा.; वैतु. Gri. प्र३ इति, ?W. बन्धुर्- इत्यस्य तृ१ इति ?)।

[a]) पाठः अर्थश्च ?। सारथिनिवेश्य-रथभागपरोऽपरः शब्दः स्यात् ?। [b]) भाप.। धा. वैरूप्ये (*भ्रष्टभावे) वृत्तिः (पावा३,१,६)। PW. प्रमृ. √बाध् इत्यस्य वृत्तमिति ?।

[c]) विप. (२अप्-, मातृ-), नाप.। शेषम् *b* टि. द्र.।

[d]) सपा. °त्सुः <> °त्सौ इति पाभे.।

[e]) पाठः? वृधा नः इति शोधः (तु. भा. [तैआ ४, २०,२])। [f]) व्यप. (ऋषि-)। व्यु. ?।

[g]) सपा. ऋ १,११९,६ वन्दनम् इति पाभे.।

[h]) नाप. [वृक्ष-भेद- (=बन्धूक- [तु. वैप ४])]। व्यु. ?।

[i]) विप.(इध्म-)। तस्यविकारीयः अण् प्र. (पा ४,३,१३७)।

[j]) सपा. तै ३, ४,८,३ आपश्रौ १७, १४,८ मान्धुकः इति पाभे.।

[k]) व्यप. [नृप- (तु. भा. PW. प्रमृ.; वैतु. शाबर-भाष्यम् [मीसू १,१,३१] वायुशब्दानुकरणमिति)]। व्यु. ?।

[l]) नाप. (अग्नि-)। व्यु.?। *वृध्- (भाप. =*खनन-)+ भ्रि- (भाप. = भृति- [*कृति-]) > बस. *वृध्-भ्रि- > नैप्र. यनि. (तु. मा ११,१० प्रमृ. अभ्रि- इति पाभे.; वैतु. सा. K. <√भृ [भरणे] इति?)।

[m]) बप्रा.। विप. ([*प्रदीप्र-, मृद्-वर्ण-] अक्ष-,रुद्र-,सोम-प्रमृ.)। व्यु.?। प्रथमेऽर्थे प्र√भ्राज् > *प्र-भ्राजु- > नैप्र. यनि. इति, द्वितीयेऽर्थे मृद्- + (√भ्राज् >) भ्राज- > उस. *मृद्-भ्राजु- > नैप्र. यनि. इति (वैतु. या ९, २८ पाम ६, १,१२ <√भृ वा √हृ वेति ?)।

[n]) सपा. बभ्रवः (आपश्रौ २०,१४,७ च) <> बभ्रुः इति पाभे.।

[o]) पाभे. वैप ४, १३५२ *a* द्र.। एतदनु पृ १७३१ *d* शोधः। [p]) व्यप. (ऋषि-)।

[q]) सपा. पै १९,१४,१३ भवः इति पाभे.।

[r]) W. बभ्रुम् आ इति ?।

[s]) सपा. शौ ६,८९,१ वृष्ण्यम् इति पाभे.।

[t]) '?यः (*=यद् [यदा]) स्वपन्तं पुरुषं बभ्रुणा इष्वा (*इषुणा) अभि अयसि, ?यो (*अथो) वरुणोऽस्ममयेन वर्मणा अस्मान् दधत्' इति वा.।

११?[a]; -भ्रुम् ऋ ७,४४, ३; ८, २२,१०; ९, ९८, ७; ¶तै २,१, २,७[२]; ८; ९; ३,३[२]; मै ¶२,५, १; ५;८; ४, ११,१†; काठ १३, ३¶; †कौ १, ५५२; २, ६७९; १०३१; †जै १,५६,४; ३, ५६, ७; शौ १२, १,११; पै १७, २, २; -भ्रुवः मै ४, २, ११; -भ्रू ऋ ४,३२,२२; २३[b]; २४; -भ्रूः मै ४, २, ४; काठ १३, ८¶; -भ्रूणाम्[c] ऋ १०, ३४, १४; -†भ्रूणाम् ऋ १०,९७,१[d]; मा १२, ७५; का १३, ६,१; तै ४, २, ६, १; मै २, ७, १३; काठ १३,१६; १६, १३; -भ्रूणाम् क २५, ४†; पै ११, ६, १†; २०, ५१, १०; -भ्रून् ऋ १०, ३४, ११; शौ ७,११४,७; पै ४, ९,६; -भ्रूम् काठ १३,८¶; -भ्रुषु ऋ १,१४०, ६; -०भ्रो ऋ ९, ३१, ५; -०भ्रो ऋ २, ३३, १५; ९, १०७, १९; २०; †कौ १,५१६; २, २७२; २७३; †जै १, ५३, ६; ३, २३, ४; ५; शौ ५, १३, ५; पै २, ४०, २; ५, २१, ५; ८, २,५; ७, ४[२]; २०, ५४, ३; -भ्रोः खि ५, १५,११[e]; शौ २, ८, ३; ५,१३,६; पै १, ४४, १; ९४,१; ६,७,८; ८, २,४; -भ्रवै मा २०,२८; का २२, २,५.

बभ्रु-क[f]- -कः पै १, ४४, ३; ४; -कान् मा २४,२६; का २६,६, १; मै ३,१४,७.

बभ्रु-कर्ण[g]- -र्णः शौ ५, २३,४; ६, १६,३; पै ७,२,४; १९,५,९.

¶बभ्रुकर्णी- -र्णी,-र्णीम् तै २, १,८,२.

बभ्रु-तूल[h]- -लानि काठ ३४,३¶.

बभ्रु-धूत[i]- -ताः ऋ ५,३०,११.

बभ्रु-नीकाश- -शाः[j] मा २४,१८[२]; का २६,४,३[२].

बभ्रु-ललाम- -माः तै ५, ६, १५, १; काठ ४९,५.

¶बभ्रु-लो(मन्->)म्नी[g]- -म्नी मै ३, ७,४.

बभ्रु-वक्षस्- -क्षः पै १, ४५, १.

बभ्लु-श[k]- -शाय मा १६. १८; का १७,२,२[1]; तै ४,५,२,१; मै २, ९,३; काठ १७,१२; क २७, २.

बम्व- > बम्व-विश्ववयस्[m]- -यसौ मै ४,७,३¶.

बम्वा-विश्ववयस्[n]- -यसौ तै ६, ६, ८,४¶.

बम्भ- > ¶बम्भा-विश्ववयस्[o]- -यसौ काठ २९,७.

बम्भारि[p]- -रिः मा ५, ३२; का ५, ८, २; तै १, ३,३,१; मै १, २, १२; काठ २, १३; क २, ७; -०रे[q] मा ४,२७; का ४, ९,४; तै १,२,७,१; मै १, २,५; ३,७,

a) ब° इति स्वरः ? यनि. शोधः। सपा. शौ २०,१३१, ३ वस्वभिः (वैतु. RW. वसुभिः) इति पाभे.।

b) नाप. (*ऊरु-, *जङ्घा- वा)। व्यु.?। (√भ्रम् ⌊गतौ⌋ > कर्तरि करणे वा) *भ्रमु- > नैप्र. यनि. (तु. पृ १६७९ *h*; वैतु. या ⌊४,१५⌋, वें. प्रमृ. = ⌊बभ्रुवर्ण,र्णा-⌋ इन्द्राश्वा- इति, स्क. सा. इन्द्राश्व- इति च)।

c) विभक्तिस्वरः (पा ६,१,१७७)।

d) विप. (⌊*पृथिवी-प्रसूता-⌋ ओषधि-)। मृद्- + (√वृध् ⌊*प्रसूतौ⌋ >) *वृधु- > उस. *मृद्-वृधु- > नैप्र. यनि. इति व्यु विशेषः द्र.।

e) बभ्रोरभीशुभिः इत्यस्य स्थाने सपा. शौ २०,१३१, ४ वायोरभीशवः इति RW., वा भारतीशवः इति शंपा. सात. च पाभे.।

f) नाप. (नकुल-जाति-विशेष-)। संज्ञायां कन् प्र. (पा ५,३,७५) नित्स्वरश्च। g) विप.। बस.।

h) विप. (आर्जुन- = अर्जुन- ⌊तु. तां ९, ५,५; तत्रत्यं C. टि. च⌋)। i) विप. (सोम-)। तृस. पूप. व्यप. (ऋषि-)।

j) पाभे. वैप ४,१३५२ *d* द्र.।

k) विप. (रुद्र-)। व्यु.?। पपा. नावग्रहः। बभ्रु- > बभ्लु- + ⌊मत्वर्थीयः⌋ शः प्र. (वैतु. सा ⌊का.⌋ म ⌊पक्षे⌋ बभ्लु- ⌊*वृषभ-⌋ + ⌊√शी >⌋ श- > उस. यनि. इति?)। l) बभ्रु° इति सात.।

m) व्यप. (ऋषि-द्वय-)। द्वस. अन्तोदात्तः।

n) पूप. दीर्घः उभ. प्रकृतिस्वरः (यक. पा ६,३,१३७; ३,१४०) इति पूर्वाद् विशेषः।

o) = बम्वा-विश्ववयस्-। बम्भार्-वि° इति MW.।

p) विप. (⌊*दीप्त्यतिशय-वत्-⌋ नेतृधिष्ण्याऽग्नि-)। व्यु. ?। < √भृ इति उ. म., नैप्र. < बम्भ्रमा ⌊म-अ⌋रि- वा बम्भ्रमद(द्-अ)रि- वेति च भा.। (√*भृञ्ज् ⌊= √भृज्⌋ 'दीप्तौ' > भावे) *भृञ्ज्- + (√भृ पुष्टौ⌋ > भावे) *भारि- > बस. *भृञ्ज्-भारि- > नैप्र. यनि. इति मतम्। सस्थ. अङ्घारि- इति यनि. पर्यायः सन् (√अञ्ज् ⌊कान्तौ⌋ > भावे) *अङ्ग- + (√भृ ⌊पुष्टौ⌋ > भावे) *भरि- > बस. *अङ्ग-भरि- > नैप्र. यनि.। q) = सपा. माश ३, ३, ३,११। तैआ १, ९, ३ तु बम्भारिः इति पाभे.।

७;८,१०; काठ २,६; क १,१९.

¶ब(,व)रा(सि>)सी[a]- -सी काठ १५, ४; -सीम् मै १, ९, ६; काठ ९,१४.

बर्जह[b]- -हम् ऋ १, ९२, ४.

बर्जह्य[c]- -ह्यें शौ ११,१०, १४; पै १६,८६,४.

बत्स्वं[d]- -त्स्वंभिः[e] तै ५,७,११,१.

¶बर्स[f]- -र्सम् तै २,५,७, १; -¶र्सौ काठ २३,९; क ३६, ६.

१बस्र्व[g]- -स्र्वैः[e] मा २५, १; का २७, ११,१.

२बस्र्व[h]- -स्र्वैः मै ३,१५,१[e].

३बस्र्व[i]- -स्र्वैः[e] काठ २५, ९; ५३, १; क ४०,२.

बर्ह्-, १बर्हण-, २बर्हण-, बर्हिषद्-, बर्हिषाद्-, बर्हिष्ठ-, बर्हिःष्ठा-, बर्हिष्य-, बर्हिस्- √बृह् (वधा.) द्र.

१बल[j]- -लम् ऋ १,३७, ⌊१२ (८,७, ११)⌋; ८०, ८; १७९, ६; ३, ५३,१८[2]; ⌊१८(१०,५३,१२)⌋; ५, ५७,६; ६,४७, ३०; ७,८२, २; ९, ११३, १; १०,८७, २५; ११६, ५; १३३,५; खि २, ९, ४; ३,१५,६; मा ११, ८१;८२; १८, २; १९, ८;९[2]; २०,७; ७१-७३; २१, २४; ५०; २५, ६[k]; २८, ३७[l]; २९, ५६†; का १२, ७,१६; १७; १९,२, २; २१, १,७; ८[2]; ७, ६; २२, ७, ५-७; २३,३, २; ६,३; २७,६, १[k]; ३०,४,३[l]; तै १,५,७, २¶; ८, १३,२; २, ४, ¶३, १[2];२[2]; ३; ८, २; १०, ३; ¶३, १, १, २; ३[2]; ४, १, १०, ३[2]; ६, ६, ७†; ७, १, २; ५,५, ९, २; ६, १, २[m];७,४,३; १२,१; ६, ६, ५, २¶; ¶७,३, ७,१;२; मै १, १०,१०[2]¶; २, १, ११; ३, ४; ७, ८[2]; ११; १३, १[m]; ३,१, ९; ११, ४[3]; ५; ८; १२; १५, ३; १६, ३¶; ४, ७,८[2n]; ११, ४[2]†; १२, ४†; काठ १, ७[2o]; १०,७; ११,४[2]¶; ९; १६, ७[2]; १८, ७; १९, १०; २९, ९[2]¶; ३१, ६; ३६, ५¶; ३७, १८; ३८, ४; ९[3]; ११;४०,३[2]; ४६, १†; ५३,२; क १, ७; २८, ७; ३०,८; ४६,२[2]¶; ४७,६; ४८, ११; †कौ १, ९५; २, ९९०; ९९१; जै १, १०, ६†; शौ १, ३५, ३; २, १७, ३[2]; २६, ४; ३, १९, १; २; ४, २४, २; ५, ९, ८; ३०, १३; ६, ६,३†; १२६, २†;१३५,१; ७,५७,१; ५८, ६; ८,१, १५;७,५; २२[p]; ९, १, १७; १२, ९; १०, २, १५; ५, १-६; ६, ७; १०, २०; ११, ९, १७;१०, २०; १२,१,

---

[a]) नाप. (एतदाख्य-स्थूलपट-)। व्यु. ?। व° इति काठ ९,१४ पाठः।

[b]) अर्थः व्यु. च ?। पपा. नावग्रहः। यनि. =ऊधस्- इति कृत्वा (√*वृ ⌊भरणे⌋ >) *वर्- ⌊पयस्-⌋+ (√हा ⌊त्यागे⌋ > कर्तरि) *जहु- > उस. यनि. इति स्क.; पूप. < √वृ ⌊संभक्तौ⌋ इति विशेषः इति सा.; =महत्त्ववत्- इति < √बृह् ⌊वृद्धौ =*महिम्नि⌋ + (भः >)हः प्र. इति WAG ⌊१,१०८;२१७ *b*⌋ ?। नाप. (योनि-)। (√भृ ⌊*सन्तान-कर्मणि⌋ > भावे) *भर्य- + (√भृ ⌊धारणे⌋ > भावे) भ्र- > बस. *भर्य-भ्र > नैप्र. यनि. (=सन्तान-कर्माधिष्ठान-)। 'यथा उस्रा (*कामिनी) वर्जहम्° अपोर्णुते, तद्-वत्' इति वा. इति मतम्।

[c]) सा. w. स्तनाग्रेऽर्थे नाप. इति ?। विप. (⌊*योनि-संवद्ध-⌋पार्श्व-) इति मतम्। तत्रभवीयः यत् प्र. तित्स्वरश्च।

[d]) नाप. (दन्त-पीठ- ⌊तु. उ. म.⌋)। (√वृध् ⌊*छेदने⌋>) वर्धस्- (दन्त-) + (√वृत् ⌊वर्तने⌋ > भावे) *वर्त- > बस. *वर्धस्-वर्त- > नैप्र. *वर्त्सूर- (नभा. मसूड़ा) > यनि.।

[e]) सपा. बत्स्वैभिः <> बस्र्वैः <> बस्र्वैः <> बस्र्वैः इति पाभे.।

[f]) नाप. [कोश-(⌊तात्पर्यतः⌋ तु. भा. =आवरण-; वैतु. सा ⌊तै.⌋ K. प्रभृ. =प्रान्त-भाग- इति ?, सा ⌊ऐ १, ११⌋ =मण्याकार-ग्रन्थि- इति)]। व्यु. ?। <(√वृ > नैप्र.) √*बृ 'आवरणे' ⌊तु. भा.⌋ इति वा < (√*वृष् > नैप्र.) √*बृष् ⌊आच्छादने⌋ इति वेति मतम् ?।

[g]) =बत्स्वं-। इह वर्धस- इत्याद्युदात्तं पूप. इत्येव व्यु. विशेषः। =*बत्स्वं- > नैप्र. यनि.। [h]) यनि. नैप्र. <बत्स्वं- इति। [i]) स्वररहिततया पृथङ् निर्देशः।

[j]) भाप., नाप. (शक्ति-, सेना-)। व्यु. ?। या ⌊३, ९⌋ <√भृ इति, अभा. <√बल् वा √वल् वेति च ?; (√*बृष् ⌊शौर्ये⌋ >) *बृष्ट- > नैप्र. यनि. इति मतम्।

[k]) पाभे. पृ २१४३ *j* द्र.। [l]) सपा. तैब्रा २,६,२०,४ वाचम् इति पाभे.। [m]) पाभे. पृ ११८६ *a* द्र.।

[n]) सपा. काठ २९,९ क ४६,२ वीर्यम् इति पाभे.।

[o]) सकृत् पाठः (तु. SI.) ? वर्णम् इति शोधः (तु. सपा. काठ ३१,६ क १,७)।

[p]) पाठ ? तु. टि. ?फलयामसि।

८; ६, १; १५, १४,३; १८, ४, ५३; १९, ३३, ४; ३७, १; २; ४१, १; ४३,६; ४६,३; ६०,१; पै १,५३, ३; ५४, २; ३; ६६, ४; ८३,३; २, १२, ४; ४४, ५; ४५, ५[२]; ८५, २; ३, १९, २; २५, ७[a]; ४, २३, ५; ३३, ५; ३९, ३; ५, ३३, ७; ६, ११, १३; ७, ३, ७; ८, २, ३[b]; ९, १४,३;२०, ८; १०, ३, १; ४, ३;११,७; १२, ५, ४; १३, ९, १३; ११, ३; १४, ३, २२; १५,११, १०†; १६, २, ५; ८, ९†; १२,५; १४,१?[c]; ३३, ७; ३९, २;४२,७; ६०,६; ८३,७; ८६,१०; १०८, १०; १२७, १-५; १३९,१०; १४१,१; १७,१, ९; १९, २, ९†; २९, २; ३६, १५; २०, २५, ४; ३४, २; ३६, ७; ४२, ८; ५७, १; –ला मै ४,१२,१; शौ १,१,१; पै १, ६, १; १९, ३९, १; –|लात् ऋ १०, १५३, २; कौ १, १२०; जै १, १३, ६; शौ २०, ९३,५; –लानि ऋ १,९३, १२; १०, २८, ११; ५४, २; –लाय ऋ ३, १८,३; १०, १८, ९[d]; मा १९, ६; ९१; २०, ३; २२, ८; २४, ३८; ३०, ९; ९३; का ३, ९,१; ६; २१, १, ५; ६,१२; ७,२; २४,३,५; २६, ८, ३; ३४, २, १; ५; तै १, ८, १५, २[e]; ४, ३, ७, २; ५, ५, १४, १; मै १,६, २;२,६, १२[f]; ३, ११,८; ९; १२,३; १४,१९; ४, ४,६[f]; काठ ७,१३; ९, ६; १५, ८[e]; ३७, १८; ३८,३; ४; ४७, ४; क ६, ३; ८, ९; शौ १, ३५,१; ३,१५, ३†; ४, १०,७; ६,६३, १[g]; ११, १२,११; १९, २६, ३; ३७, ३; ४६, १; पै १, ५४, ४; २, ८६, १-६; ४, २३, १; २५,७; ७, ५, २; ७; १५, २१, ७;१९,११,४[g]; –ले मै २, १३, ६‡[h]; काठ ३९,१२‡[h]; कौ २, ५७३‡[h]; जै ३,४६, ११‡[h]; शौ २, २९, १; ११, ९, १७; पै १६, ७२,८; ८३, ७; १९, १७, १०; –लेन खिसा ३३, १७?[i]; मा ९, ९; २०, ८०; २१, २७; ३२; ३९,९; का १०,२,६; २२, ८, १; २३, ३, ५; ४, ४; ३९, ७, १; मै ३, ११, २; १२; ४, १४,१२; काठ ३८, ११; शौ ३, ५, १; ४, २५,४; ५, ३०, १४[j]; ६, ९२, २; ७,८७, २; ९,२,६; १३, १,६; १५, १४,४; ‡१८, २,५९[d]; ६०[d]; पै २, ६८,१-५; ३, १३,१; २५,१३; ४, १४,७; ३४, ६; ५,१०,८;२२,१;८,२, ३[k]; ११, ५, ६; १३, ९, ११; १६,१३,२?[l]; ७६,५; १७,२९, १७; १८, १५,६; १९, ३१, ८; ३४, ११; ५१, १७; २०, ३२, ३; ४९,५[२].

बल-दु*[m]– -०द मै १,४,१४.

बल-दा[m]– -|दाः ऋ ३, ५३, १८; १०, १२१, २; मा २५,१३; का २७, १०, ४; तै ४, १, ८, ४; ७,५, १७, १; मै २, १३, २३; काठ ४०,१; शौ ४, २, १; १३, ३, २४; पै २, ४४, ५$; ४, १,२; १९, ३१,८$; –दाभ्याम् तै ५, ६,२१,१; काठ ५०,१.

बल-दावन्[m]– -‡वा[n] शौ ४,३२,५; पै ४,३२,५.

बल-देय[o]– -याय[n] ऋ १०,८३,५.

बल-पति– -तयः मै ४, ७,९¶.

बल-भृत्– -०भृतः मै ४, २, ११.

बल-वत्– -वत् पै १३, १०, २; –वतः पै २, ६८, १-५; –वद्भिः मै २, ९, १?[p]; –वन्तम् खि २, १४, ७; –वान् मा ९, ९; का १०, २,६; शौ ६, ९२,२; पै ७, ५,६; १२,७,८; १९, ३४, ११.

बलवत्-तम,मा– -मः शौ ५,४, १; पै ४, २०,५; १९, ८, १५; २०, ३९, १; –|मास्[q] ऋ १०, १४५, १; शौ ३, १८,१; पै ७, १२, १०.

---

a) सपा. शौ ४,११,११ व्रतम् इति पाभे. ।
b) सपा. शौ ५,१३,४ चक्षुः इति पाभे. ।
c) पाठः ? तु. सस्थ. टि. ?फलयामसि ।
d) सपा. बलाय <>बलेन इति पाभे. ।
e) पाभे. पृ ८३०९ द्र. । f) पाभे. पृ ८७२ j द्र. ।
g) सपा. मा १२,६५ का १३,५,४ विभे. ।
h) सपा. ऋ ८,९३,८ मदे इति पाभे. ।
i) °ले° इति स्वरः ? यनि. शोधः ।
j) सपा. पै ९,१४,४ सर्जनेन इति पाभे. ।
k) सपा. शौ ५,१३,४ चक्षुषा इति पाभे. ।
l) पाठः ? सपा. शौ ८,७,१२ बभूव इति पाभे. ।
m) विप. । उस. उप. यक्र. कान्तं विजन्तं वनिबन्तञ्च द्र. । n) सपा. °दावा<&gt°देयाय इति पाभे. ।
o) उस. उप. भावे यत् प्र. ।
p) °वद्भिः (सात. °वद्भिः) इति पाठः ? यनि. शोधः ।
q) =सपा. आपमं १, १५, १ । शौ ४, ३७,६ तु

बलीयस- -यसे शौ ३, २९, ३.
†बल-विज्ञाय[a]- -यः ऋ १०,१०३, ५; मा १७,३७; का १८, ४,५; तै ४,६,४,२; मै २,१०,४; काठ १८,५; क२८,५; कौ २,१२०३; शौ १९,१३,५; पै ७,४,५.
बलिन्- -†लिनः ऋ १०, ८५, २; खि २, १४, ११; शौ १४, १, २; पै १८, १, २; -लिना पै २०, ६१, ६; -ली काठ २१, १¶[b]; क ३१, १६¶[b]; शौ ३, ५,१; पै ३,१३,१; १३,३,१०.
२वल- =वल- द्र.
वलक्ष[c]- -क्षः तै ५,५,२३,१; ¶मै २, ५,११; ४, ५, ७; काठ ४८, २; -क्षम् मै २, ५,११¶.
वलक्षी[d]- -क्षी तै २, १,२,२¶; ५, ६, १२, १[e]; मै २,५,२¶; ३, १३, ५[e]; ४, ५,७¶; काठ १२, १३¶;२७,२¶;४९,२°, क ४२, २¶.
?वलमित्येक्ष पै १५,१२,७.
?वलाः पै २,२५,१[f].
वला(क>)का[g]- -का मा २४, ३३; का २६,७,३; तै ५, ५,१६, १; मै ३, १४, १४; काठ ४७, ६; -काः मा २४,२२; का २६, ५, २; मै ३,१४,३.
वलास[h]- -०स शौ ६, १४,३; १२७, २; पै १, ९०, २; १९, १३, ९; ३७, १५‡[i]; -सः शौ ४,९,८; ९, १३, १०; पै ८, ३, ७; १६, ७४, १०; -सम् शौ ५, २२, ११; ६,१४,१; २; ९, १३, ८; १९, ३४,१०; पै १, ९०,३; ५, २१,६; ११, ३, १०; १६, ७४, ७[j]; ८; १९,१,१०; १३, ७; ८; -सस्य मा १२, ९७[k]; का १३, ६,२१[k]; शौ ६,१२७,१[l]; -सेन शौ ५. २२,१२; पै १३, १,११.
वलास-नाश(न>)नी[m]- -नीः शौ ८,७,१०; ५ ,६, १२,१०.
!वलासप... पै ८.८,८.
वलास-भेष(ज->)जी- -जी पै २०,५६,९.
वलासिन्- -सिनः शौ ६, १४, २; पै १,९०,३; १९,१३,८.
?वलाहक[n]- -कम् पै ६,१४,२.
१वलि[o]- -लयः पै १९, २०, १६; -लीः पै १९, २०,१५[v];१६.
२वलि[p]- -लयः पै १०, २, ६; -लिः काठ ३९, ८; शौ ११, १२, ५; -लिना तै ३, ३, ८, २[q]; शौ ६, ११७, १[q]; पै १६, ४९, १०[q]; ६९, ६‡[r]; १९, ३९, १२[q]; -लिभिः काठ २९, ९¶; -लिम् ऋ १, ७०, ९;

---

वीर्यावती इति पाभे. ।

[a]) विप. (इन्द्र-) । उस. उप. वि√ज्ञा + कर्तरि अण् प्र. (वैतु. ?Garbe ⌊KZ २३, ४८९⌋ ज्ञे° इति) ।

[b]) सपा. तै ५,३,४,६ ओजस्वी इति पाभे. ।

[c]) विप. (⌊*श्वेतरोम-वत्-⌋ पेत्व-) । व्यु. ?। पपा. नावग्रहः । नैप्र. पलक्ष-(तु. व्यु. पृ १९६६ *a*, इह वस. इति विशेषः) इत्येतत्-सजातं सत् तेनैव गतार्थं द्र. (वैतु. Charpentier ⌊KZ ४०,४५२⌋ < बल- + अक्षि- इतीव ?) ।

[d]) विप. (⌊श्वेतरोम-वती-⌋ अजा-) ।

[e]) पाभे. पृ १९६६ *b* द्र. ।

[f]) पाठः ? इन्द्र-बल- (विप. ⌊आदित्य-⌋) > -लाः इति शोधः । एवं सस्थ. पृ ८१० इन्द्र इति नेष्टम् ।

[g]) नाप. (⌊श्वेतरोमवद्-⌋ बकवर्ग्य-पक्षिन्-) । व्यु. ? । पपा. नावग्रहः । बलक्ष- इत्येतत्-सजातम् (वैतु. पाउ ४,१४< √वल् इति, कैयटः ⌊पाम ४,१,६३⌋ <बल- + आक- ⌊< आ√कै⌋ इति च) ।

[h]) नाप. (श्लेष्म-यक्ष्मन्- ⌊तु. उ. म.⌋) । व्यु. ? । पपा. नावग्रहः । (*श्लेष्म-भर्->) नैप्र. *बल- + (√अस् ⌊क्षेपे⌋ >भावे) *आस्-> बस. यनि. (वैतु. सा. पूप. =१बल- इति ?) ।

[i]) सपा. ऋ १०,९७,१२ यक्ष्म इति, पै ११,२,१४ विष्कन्धम् इति च पाभे. ।

[j]) सपा. शौ ९,१३,७ यक्ष्मम् इति पाभे. ।

[k]) पाभे. पृ १९६६ *q* द्र. ।

[l]) सपा. पै १,९०,१ असितस्य इति पाभे. ।

[m]) विप. (ओषधि-) । उस. उप. <√नश् ⌊अदर्शने⌋ ।

[n]) विप. (⌊हानि-कारक-⌋ अराय- ⌊=रक्षस्-⌋) व्यु. ? । (अप √राध् >) *अप-राधक- > नैप्र. यनि. इति ? ।

[o]) नाप. (भङ्ग-, वलि-) । व्यु. ? । < √*बल् 'वर्तने =कुटिल-भावे' (नैप्र. <√वृत्) ।

[p]) नाप. (भोजन-, देयांश-, कर-) । व्यु. ? । 'पुष्यतेऽनेन' इति च 'धार्यतेऽन्यस्मै' इति च कृत्वा <(√भृ>नैप्र.) √*बल् 'धारण-पोषणयोः' (तु. ⌊तात्पर्यांशतः⌋ अभा. < √बल् ⌊दाने⌋ इति, GW. प्रमृ. < √भृ इति; वैतु. पाउ ४,१२४ < ⌊√वर्ण् ? >⌋ √*बल् इतीव ?) ।

[q]) =पाश- (=अधि- ⌊शौ ६,११८,२⌋ = निधि- ⌊मै.⌋ = मिथु- ⌊कामा⌋) । सपा. मै ४,१४,१७ तैआ २,३,८ निधिना इति, कामा १२६ : ४ मिथुना इति पाभे. ।

[r]) सपा. ऋ १,१६४,३७ शौ ९,१०,१५ मनसा इति पाभे. ।

५, १, १०; ७, १८, १९; ८, १००,९; ¶मै ३,१,१[२];४,४,६; ११,४†; काठ७,१६†;२८,२[२]¶; २९, ९[२]¶; क ४४, २[२]¶; शौ ३, ४,३; १०, ७, ३९; ८, १५; ११, ६,१८; १९; १९, ४५, ४; ५५, ६[a]; पै २, ६५, ३; ३,१, ३; १५, ४, ४; १२, ८?; १६, २२, ८; ९; १७, १०,१०; १८, २५,९; २०,४७,१०[a].

बलि-रुच्- -रुचः पै १९, ५२, ६[b]; २०,८,५.

बलि-हार्[c]- -राय शौ ११, १, २०; पै १६,९१,१.

बलि-हृत्[c]- -हृतः ऋ ७, ६, ५; १०,१७३, ६[d]; तै १, ६, २, १; मै १, ४, १; ३, १, १[२]¶; ४, २, ८¶; काठ ४, १४; २९,९¶; ३५,७†[d]; क४८,९†[d]; शौ ११, १, ६; ६,१९; १२,१,६२; पै ३, १,८†[d];१६,२२,९;†१९[d],६,४; २३,१४.

३?वलि- > बलि-वन्दु[e]- -न्दाय काठ ५२,१[f].

?‡वलिंसम्[g] पै ६,१६,९.

?वलिदंचः[h] पै १६, ८९,६.

?वलिधानीय[i] पै १९,२०,१७.

?वलिरवाः[j] पै २०,९,४.

?वली[k] पै १९,२०,१७.

बल्वज[l]- -जम् शौ १४, २,२२; २३; पै १८, ९,३;४; -¶जाः तै २, २,८,२; मै २, २, ५; काठ १०, १०[२]; -जान् तै २,२,८,१¶.

बल्वज-स्तुका- -काः ऋ ८,५५,३; खि ३,७,३.

बल्वव् अथो इति, बल्ववो अथो इति[m] खि ५,१५,४.

बल्बूथ[n]- -थे ऋ ८,४६,३२.

बल्हिक[o]- -कान् शौ ५, २२,७; ९; पै १३,१, १४; -केषु शौ ५, २२,५; पै १३,१,७.

बभ्रु- -भ्रुम् पै १७,१५,१०.

बष्कय[p]- -यम् पै १३, ५,६[q]; -†ये ऋ १, १६४, ५; शौ ९, १४, ६; पै १६,६६,५.

ब(,व)ष्किह[r]- -हान्[s] मा २४, १६; का २६,४,१; मै ३,१३,१४.

बस्त(वप्रा.)[t]- -स्तः ऋ १, १६१, १३[u]; मा १४, ९; का १५, ३, २; तै २,३,७, ४¶; ४,३,५,१; ५,३,१,५¶; मै २,८, ९; ४,२, १०¶; काठ १७, २; २०, १०; क २६, १; ३१, १२; -स्तम् तै ५, ७, १०, १¶; -स्तस्य पै

a) तु. टि. अप्रयावम् ⌊परि.⌋।

b) सपा. कौसू ४,१ बलवतः इति पाभे.।

c) विप.। उस. उप. यक्र. अण् प्र. क्विप् प्र. च।

d) सपा. मा ७,२५ माश ४, २,४, २३ सुमनसः इति तै ३,२,८,६ शौ ७,९४,१ संमनसः इति च पाभे.।

e) नाप.। व्यु. पृ ४३६ *b* द्र.।

f) सपा. तैब्रा ३, ८, २०, ५ आपश्रौ २०, २१, ६ बलिवर्दाय इति पाभे.।

g) पाठः? (प्र√*रिंश् ⌊रसे⌋ >) *प्र-रिंश- ⌊वर-रस-⌋> -शम् इति शोधः (तु. सपा. ऋ १, १८७, ८ परिंश- > -शम् इति पाभे.)। पृ १९२९ *e2* अपि परि> प्र इत्युपसर्ग-शोधः द्र.।

h) पाठः? बलि- + (√*दंश्च् ⌊दाने⌋ > कर्तरि) *दंश्च्- > उस. बलि-दंश्च्- >⌊द्वि३⌋-दंश्चः इति शोधः (तु. सपा. शौ ११,१,६ बलिहृतः इति पाभे.)।

i) पाठः? आ शमीम् मामकी बलिः, उद् रोहतु यथा दिवम्। या तावद् इन्द्रस्य जाया, बलि-धानीयं कृण्वतः इति मन्त्र-शोध इति कृत्वाऽत्र बलि- + (√धा ⌊कृतौ⌋ > भावे) धानीय- > षस. *बलि-धानीय- > -यम् इति।

j) पाठः? विश्वा(:) विशस् त्वा, १बलि- + (√रा ⌊दाने⌋> कर्तरि विचि) रा- >उस. बलि-रा- >(स्त्री. प्र३)-रा(:)उपासताम् इति जागतः पादः शोधितः द्र.। सस्थ. सर्वाः इति शब्दोऽधिक इति कृत्वा सुपरिहरः।

k) पाठः? °लिः इति शोधः (तु. *i* टि.)।

l) नाप. (तृण-विशेष- ?)। व्यु. ?।

m) पाठः? तु. पृ १९६७ *f*, २२६० *a* च।

n) अर्थः व्यु. च?। वें. सा. PW. प्रमृ. व्यप. इति?। विप. (तरक्ष-) इति कृत्वा (√भृ ⌊पोषणे⌋>कर्तरि) *भर्व- + भूत-> कस. *भर्व-भूत- > नैप्र. यनि. स्याद् इति मतम्?। o) व्यप. (देश-)। व्यु. ?।

p) विप. (⌊*वत्सर-कृत-⌋ वत्स- ⌊=*सूर्य-⌋, दिविस्पृश- ⌊=*सूर्य-⌋)। वर्ष- (वत्सर-) + कृत- (भाप.) > बस. *वर्ष-कृत->नैप्र. *बष्कृत- > यनि.।

q) व° इति मूको.। r) विप. (⌊चिर-प्रसूत-⌋ पशु-)। व्यु. ?। व° इति मै. पाठः (तु. MW.)।

s) सपा. आपश्रौ २०, १४,१० बाष्कान् इति पाभे.।

t) नाप. (छाग-)। व्यु. ?। <√*ब(व)स् ⌊आच्छादने⌋।

u) नाप. (सूर्य- ⌊तु. सा.⌋)। < √*ब(व)स् (दीप्तौ; वैतु. सा. निवासे इति)।

४, ५, ६[a]; –स्तेन तै ७, ३, १४, १; काठ ३५,१५; ४३,४.

¶बस्ता(स्त-अ)जिन्- -नम् मै १, ११,८[२]; ३,४,३; काठ १४, ८[३]; –ने मै ३,४,३.

बस्त-वासिन्[b]- -सिनः शौ ८, ६, १२; पै १६,८०,३.

बस्ता(स्त-अ)भिवासिन्[c]- -सिनः शौ ११,११,२२.

बस्नि[d]- -स्नि ऋ १, १२०, १२.

बहिस् (:,र्,ष्)[e*]- -हिः तै ३,२,१०, २; ६,१,२,१¶; ¶मै ४,६,२[४]; ३[४]; काठ १३,९; २३,१¶;३४, ८¶; क ३५,७¶; शौ १,३,१-९; ९,१३,१-९;११;१३-१८; १९, ४४, २; पै १,४६, २; ४; १५, ३,२; १६,७४,१-५; ७-९; ७५, १-८; १९, २१, ८; २०, २१, ९‡[f].

बाह्य,ह्या[g]- -ह्यम् मा २५, २; का २७,२,१; तै ५, ७,१२,१[h]; मै ३,१५, २; काठ ५३,२[h]; शौ २,३०, ४[२]; पै २,१७,४[२]; –ह्याः खि २, ६, ६?[i]; तै ७, ३. १, २¶; शौ १९, ४४, ६; पै १, १००,१; १५, ३,६.

बाह्य-तस् (:) मा ४०, ५; का ४०,१,५.

¶बहिः-परिश्रि[j]- -धि तै २, ५, ८, ६; ६, ६, २[२]; ६,२, ८, ५[२].

बहिः-प्राण[k]- -णः तै ६, १, १, ४¶.

¶बहिर्-आत्म[l]- -त्मम् मै २, ३, २[२]; काठ १२,२.

बहिर्-धा मा ५,११; का ५, ४, २; तै ७,२,९,२¶.

¶बहिर्-यज्ञ[m]- -ज्ञम् काठ २६,९; २९,२; क ४१,७; ४५,३.

¶बहिर्-लोम[k]- -मम् मै ३,६,६; काठ २३,३.

बहिर्-लोमन्[k]- -म्णी काठ २३, ३¶.

¶बहिर्-वेदि[m]- -दि तै २, ५,११, २; ६, ६,४,१; मै ३, ८,९; ९, ४[२]; ४,६,९; काठ २६, ६; २८, ५; २९,८[२]; ३४,५; क ४१, ४; ४४,५.

¶बहिष्-टात् तै ६, ४,९, ३; मै ४, १, १२[२]; काठ २३,३; २६,६[२]; ३४, ११; क ४१,४[२].

¶बहिष्टान्-निर्बाध[n]- -धम्[o] काठ १९,११; क ३१, १.

¶बहिष्-पथ[p]- -थम् मै १,८, ९; २, १,१०; काठ १०,५.

¶बहिष्-परिधि[p]- -धि मै १, ४, १३; ३,८,६;४,६,८; काठ २५, ७[२]; क ३९,५[२].

¶बहिष्-पवमान[q]- -नः तै ६, ४, ९,२[२]; काठ २७,४; –नम् तै ३, १,१०, ३; ६, ३, १, १; मै १, ९,५; ३,८,१०; ४, ४, १०;६, २[२]; काठ १५,१०[२]; २३,२;२७, ४; २८,१०; २९, ३; क ३५,८;

---

a) सपा. शौ ४,४,८ अजस्य इति पाभे.।

b) विप. (⌊भ्रष्ट-गन्धि-⌋ मकक- ⌊=*मक्षक-⌋)। व्यु. ?। भ्रष्ट-+(√*वास् ⌊गन्धे⌋>) वासिन्->उस. *भ्रष्ट-वासिन्->नैप्र. यनि. (वैतु. अन्ये पूप. =छाग- इति)। उप. कृते तु. Web. ⌊तु. W.⌋, Gri.; वैतु. सा. W. < √वस् ⌊आच्छादने⌋ इति, PW. प्रभृ.< √वा ⌊श्>⌋ स् ⌊शब्दे⌋ इति च ?।

c) विप. (⌊भ्रष्टशब्द-कृत-⌋ *अमित्र-)। भ्रष्ट-+ (अभि√*वास् ⌊शब्दे⌋ >) अभिवासिन्->उस. यनि. (वैतु. सा. बस्ता ⌊स्त-अ⌋ वि-वा° इति पाठ इति कृत्वा यनि. =अजावितुल्यशब्दिन्- इति, PW. प्रभृ. =अजवदभिशब्दिन्- इति, W. =अज-गन्धि- इति च? )।

d) वा. क्रिवि. =*ध्रुवम् (वैतु. अन्ये =क्षिप्रम् इति)। व्यु.?। <√*बस् (=√बध्) 'बन्धे'।

e) अतिरिक्तेऽर्थे अव्य.। व्यु. ?। <√वह् ⌊प्रापणे⌋ इति पाउ ⌊२,१०८⌋। (√वर्ज् ⌊वर्जने⌋ >) *वर्जिस्- > नैप्र. यनि. इति मतम्।

f) सपा. ऋ ५, ७८, ८ अवेहि इति, मा ८, २८ का ९,५,१ माश ४, ५,२,५ अस्रत् इति च पाभे.।

g) विप.। तात्रभविकः यत् प्र. (पावा ४,१,८५)।

h) सपा. मा. २५,२ का २७,२,१ मै ३, १५, २ अन्तरम् इति पाभे.। i) °ह्याः इति स्वरः? यनि. शोधः।

j) अस. अन्तोदात्तः (तु. पृ २३१ $f$)।

k) विप.। बस.।

l) अस. अन्तोदात्तः (तु. पृ २३१ $p$)।

m) अस. वा. क्रिवि. द्र.।

n) विप. (रुक्म-)। बस.। तु. वैप २,३खं.।

o) सपा. मै ३,२,१ माश्रौ ६,१,३,२ वाश्रौ २,१,३,१ उपरिष्टान्निर्बाधम् इति, हिश्रौ ११, ३, २६ ?बहिष्ट-निर्बाधम् इति, वैश्रौ १८, ७ : २९ बहिर्निर्बाधम् इति, आपश्रौ १६, १०,९ बहिर्निर्बाधान् इति च पाभे.।

p) अस. अन्तोदात्तः।

q) नाप. (⌊प्रातःसवने सदसो बहिर् गीयमान-⌋ स्तोम-विशेष-)। सुप्सुपीयः समासः। अन्तोदात्तः।

४२, ४; ४५, १; ४; –नस्य मै १, ९, ५; ३, ३, २; ४, २, ४; काठ २२, १०; क ३५, ४; –नात् काठ २७,४; क ४२, ४; –ने तै ६, ३, १, १; ४, ९, २; मै ३,६,४; ८,१०; ४, ६,१; २; ८, ४; काठ २७, ४; ३४, १६; १८[२]; क ४२,४; –नेन तै ६,४, ९,२; मै ३,८,१०[२]; ४, ६, २; काठ ९,१४;२७,४; क ४२,४.

बहु[a]– -हवः ऋ २, १८,३; ४,२५,५; ७, ६६,१०; ९, ७२,२; ८५,३; १०, १०१,१; १०७, ३; १४२, ५; तै २, ३, १४, ४; ३, ३, ८, २[b]; ४, ७, १५, १[c]; ¶६, ५, १,४; ९, ४[२]; ¶७,४, ३, ५[२]; ७, ३; मै १, २, ९; ६, १२¶; ३, १,१[२]¶;९,४¶;१६,५[c]; ४, ६, ५¶; १२, ४; ¶काठ ७, ८; १०, १३§;२२,१५§[c];२५, ३; २७,५; १०; २८, ६; ९[२]; ¶क ३८, ६; ४२, ५; ४४, ६; ९[२]; शौ १, २७, ३; २, १३, ५; ३, १५, २[d]; ६, ५५, १[d]; १२, १, ४७[e]; २,२१‡[f];१३,३,१७;१८, ३, ६१; पै १, ११२,१; १५, ६, ९; १७,३२,१‡[f];१९,९,२;३१, ६;४९,४[d]; –हवे ऋ १०,१०२, ८; –हु[g] ऋ २,१३, ⌊१३; १४, १२⌋; २४,४; ६, १०, ४; १०, १०,११; ३४, १३; ५२, ४; खि ५,३, २; २१,२[h]; मा २३,२५; ३१; का २५, ६, ५; ११; तै १, ७,६, ४¶; २, ४, ७, २; ४, ७, ४, २; मै ¶१,८,६[४]; ७; २, १, १०¶; ३,५¶;४,७; ७, १२; ३, ७, ४[३]¶; ७;१०,१¶;४,१,२¶; ३; ५, ६; ८, ३¶; ¶काठ १०, ६; ११,२;९§; २३, ५; २४,१; २६,८; २८, ४[२]; २९,३[२]; ३१, १; २; ¶क ३७, २; ४१, ६; ४२, ५; ४४, ४[२]; ४७, १; २; शौ १,१०,३; ३,५,४; २४, २; ४, २८, ४; ३४,२; ५, २१, ५; ६, १४१, २; ८, ८, २०; १०, ८, २२; ११, ७, २६; १२, ४; १२, १,२[i]; १८, १, १२; १९, ६०, १; २०, १३५, १२[h]; पै १,९,३; ३७, ४; ५; ३, १३, ४; ४,३७,४; ५,३०,२; ६,२२, २; ७,१३, १२; ८,१२, १; ८; ९,२४,७?[j];१२,३,६;१५,३,८; १९, १२; १६,३०, १०; १०२, ९;१५५,३;१७,१,२[i]; १८,१२, ७[k]; १९,२२,९; ५०,१५; –हुः ऋ ६,७५, ५; मा ३,४२[l];२९, ४२†; का ३,४,५[l];३१, २,७†; तै ४,६,६,२†;५,१,२,३¶;¶मै १, ८,९; ३,१६,३†; ४, २, १; ¶काठ ६, ५; ९, १३; १९, २; ४६,१†; ¶क ४, ४; २९, ८; शौ ६, १४२, १; ७, ६२, ३[l]; पै ३, २६, ४[l]; ३७, १; ४,२७, ७; १०, ४, ९; १५, १०, ५†; १९, ३६, ११; –हुभिः ऋ ६, १, ३; तै १, २,१३,२[m]; मै १, २, ९[m]; ४, १३, ६†; काठ २, १०[m]; १८, २०†; क २, ४[m]; शौ ४, १, ६; ७,२७,८[m]; पै ५, २, ५; –हुभ्यः ऋ १, ८४, ९; ९३, ४; १६१, ९; १०, १४, १; खि ५,७, २, ११; ४, १५; मा २१, ६१; का २३, ६,१४; मै ४, १३, ९; १४, १६†; काठ १९,१३; कौ २,६९२†; जै ३, ५६, १९†; शौ ५, २०, ९; ६, २८,३; १८, १,४९†; २०,६३, ६†; पै ९, २४, ९; १९, २७, १३†; –हुम् मा १७, ५०[n]; का १८, ५,१[n]; मै २,१०, ४[n]; काठ १८,३[n]; क २८,३[n]; शौ ३,४,३; २४, ७; ६, ५, १[n]; २०, ३४, १२?[o]; पै १, ३३, २[n]; ३, १, ३; १३, ७, १२?[o]; १९, ३,

---

a) विप. = मात्रया संख्यया वाऽधिक-। व्यु.?। या ⌊३, १३⌋ <प्र√भू इति। <√*बह् ⌊बृंहणे संघाते च⌋ इति (तु. ⌊अंशतः⌋ WAG ⌊१,१०५ *b*⌋, SEY ⌊११०⌋)।

b) पाभे. पृ १२४० *m* द्र.।

c) सपा. शौ ४,२३,१ बहुधा इति पाभे.।

d) पाभे. पृ १३०५ *j* द्र.।

e) सपा. पै १७,५,५ बहुधा इति पाभे.।

f) सपा. ऋ १०,१८,१ विभे.।

g) क्वचित् वा. क्रिवि.।

h) तु. RW.। शंपा. सात ⌊शौ २०, १३५, १२⌋ बहुः इति पाभे.।

i) सपा. मै ४,१४,११ महत् इति पाभे.।

j) पाठः प्रक्षिप्त इव? ⌊तु. सपा. शौ ५, २०, ६ एतदभावः⌋। k) सपा. शौ १४,२,६० गृहे इति पाभे.।

l) = सपा. आपश्रौ ६, २७, ३। हिश्रौ ६, ७, ८ तु ?बभुः इति, माग्र १, १४,५ महत् इति च पाभे.।

m) पाभे. पृ ९६१ *p* द्र.।

n) बहुं कृधि इत्यस्य स्थाने सपा. आपश्रौ ६, २४, ८ बहून् कृधि इति, तै ४,६,३,१ धनेन च इति च पाभे.।

o) बहुं जनम् इति पाठः ? च, भोजनम् इति द्वि-पदः शोधः (तु. RW.)।

१४[a]; -हून् ¶काठ २९,८;३०, ७; शौ १९, ३२, ६; पै १२, ४, ६; -हूनाम् ऋ २, ३५, १२; १०, ५५, ५[b]; ८४, ४; तै १,२, १३, १; ६, ७, १¶; ६, ५, १, ४¶; मै १, २, ९; ४, ५¶; ३, १६, ३‡[c]; ४,९, १२†; ¶काठ २७, १०; ३१, १५; †कौ १, ३२५; २, ११३२; जै १, ३४, ३†; शौ ४, ३१,४†; पै ४, १२, ४†; -हूनि ऋ ४, १८, ३; ¶मै १, ८,६; २, ५,११[२]; काठ २९, १¶; क ४५,२¶; पै १, ९१,४; १६, १७,५[d]; २०,२४,१; -होः ऋ १०, १४२, ३; मा २९, ९; का ३१,१,९; तै ५, १,११, ४; मै ३, १६,२; काठ ४६,२.

बह्वी- -ह्वी पै ८,१८,११; ११, १,७; -ह्वीः ऋ १, १८८, ५; १०, ९७,१८; १२४, ४; खि १, ११, ४; २,८,४; ४, १२, १?[e]; मा १,१; १२, ९२†; का १, १, ३; १३,६,१८†; तै १, १,१,१; ५, ६,१; २,६, १, ४[२]¶; ६, ३, ६, १; ५,१, ४¶; मै १, १, १; ५, २; ९; २,१३,२२; ४,१,१; १३[२]¶;२¶,४;९[२];१४[३]; काठ १, १; ७,१[२f]; २५,२¶; २९, ८¶; ३०,१०; ३१,१०[२]¶; ४०,१२; ४३,६‡[g]; क १,१;५,१[२f]; ३८, ५¶; ४६, ८; ४७, १०[२]¶; शौ ६, ९६,१†; ११,६,३; १३, २, ४; ६; ७; पै १, ३७, १; १३, १३,९; १६, २१, ३; १८, २०, ८;२१,१;१९,१२,४†;२२,१४; २८,१०; ११[h]; ५१,८‡[g]; २०, ४०,९; -†ह्वीनाम् ऋ १, ९५, ४; ६, ७५,५[c]; मा २९, ४२[c]; का ३१,२,७[c]; तै ४,६, ६, २[c]; काठ ४६,१[c]; पै ८,१४,४; १५, १०,५[c]; -ह्वीभिः ¶तै १,५,९, २; ६, ५, ९, २[२]; -ह्वीम् पै १, ११२,३; ८, ११,९; २०, ३४, १०[i]; -ह्व्यः[j] खि ३, ११, २; मा १९,४४; का २१, ३,१५; मै ३,११,१०.

?बहु-कर्दि(न् >)नी[k]- -नी पै १९, ५१, ९.

बहु-कार्[l]- -ऽर[l] मा १०, २८; -रः पै ८,१८,८?.

बहु-कुमार[m]- -राः पै १०,४,९.

बहु-चारिन्- -री शौ ११, ४, १५.

¶बहु-तय- -याः तै ६,१,६,६.

बहु-त्रा ऋ १०, १६४, २[n]; पै १९, ३८,४‡[o].

बहु-देवता- >°त्यं- -त्यः तै २, १,६,५¶.

बहु-धा ऋ १, १६४,४६; ८, ५८, १; ३; १०, ५१, १-४; ११४, ५; १६४, १[o]; २; खि ३, १५, १८?[e]; ३१?[e]; १८,१;२;४,११, ११; मा १९, ८१; ३१, १९; का २१,६,२; ३५, २, ३; तै ३, १,४, २; ४,३, ११, ५; ५, ६, १, १; मै १, २, ८‡[p]; ७, ३¶; २, १३,१; १०; २२; ३,११,९; ४, १४, ११; काठ २, ९‡[p]; ९, १¶; २७, १०¶; ३०, ८; ३८, ३;१२;३९,१०;४०, १२; क २, ३‡[p];८,४¶; ‡कौ[p] २,८०३;३, ५, २; ‡जै[p] २, ३,२; ४,२,९; शौ १, ३३, ३; २, ३४, ४; ३, ४, ७; ४,१५,१६; २३, १[q]; ५, २०, ४; ९; २६, ७; ८; १०; ११; ६, ७१, १; ९, १, ३; ५, १; ३; १५, २८†; १०,४,२३; ८, १३; ११, २, १७; १२, १, ४; ४४; ४५; ३, २१; ५४; ४, २९; १३, ३, १७; १७, १, ६-१९; २४; १८, २, ५७;१९, ५३, ३; २०, ९६, २४†; पै १, २५, ३; ९१,४; २,२८,२; ७३, ३[r]; ३, १,७;१९,५; ४,३३,१[q]; ५, ४,२?[r]; ७,१४; १०, ९; ६,

---

a) पाभे. पृ २२७० *n* द्र.। b) पाभे. पृ २११० *h* द्र.।

c) सपा. बहूनाम् <> बह्वीनाम् (आपश्रौ २०, १६,८ हिश्रौ १४,३,३१ या ९,१४ च) इति पाभे.।

d) सपा. शौ १०,४,२३ महान्ति इति पाभे.।

e) व्रु° इति स्वरः? यनि. शोधः?।

f) सकृत् सपा. तै १,५,६,१ मै १,५,३;१० सुर्वाः इति पाभे.। g) सपा. ऋ १०,१६९,४ शिवाः इति पाभे.।

h) सपा. आपश्रौ ६,२३,१ भाग्र २, २० : १२ चारवः इति पाभे.।

i) बह्वीम् अथो इत्यस्य स्थाने सपा. शौ १४,१,४२ सौभाग्यम् इति पाभे.।

j) सपा. शौ ६,६२,२ काठ ३८,२ पाठाभावः।

k) विप.। उस. उप. <√कर्द् ⌊अर्थः?⌋।

l) पाभे. पृ २२४७ *c* द्र.। m) विप. (जन-)। बस.।

n) सपा. पै १९, ३८,५ बहुधा इति पाभे.।

o) सपा. बहुत्रा <> बहुधा इति पाभे.।

p) पाभे. पृ २०४५ *h* द्र.।

q) पाभे. पृ २२७० *c* द्र.।

r) पाठः? (प्र√वृध् ⌊*हिंसायाम्⌋ > भावे) *प्र-वृध्- > (तृ१) -वृधा इति शोधः (तु. पृ २१८४ *l, m, n*)।

